१–श्रीरामानन्दवेदान्तग्रन्थमालायाः प्रथमं पुष्पम्

भगवद्रामानन्दाचार्यप्रणीतानन्दभाष्योपेता

# छान्दोग्योपनिषत्

त्रिभुवनदासः

संशोधकः—

स्वामी श्रीवासुदेवाचार्यः—

दार्शनिकसार्वभौमः न्यायव्याकरणवेदान्तमीमांसाचार्यः

| संवत् | श्रीरामानन्दाब्द ६६८ | भाद्रपद |
|---|---|---|
| २०२५ | सर्वेऽधिकाराः प्रकाशकाधीनः | ऋषिपञ्चमी |

Scanned by CamScanner

# सूचीपत्रम्

## पूर्वार्धम्



## उत्तरार्धम्



સમરીતિર્ભદ્દાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાત્ જ્ઞાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Ankur Nagpal

श्रीरामो विजयतेतराम्

भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# छान्दोग्योपनिषत्

ॐ आप्यायन्तु ममाङ्गानि वाक्प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणं मेऽस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु ।।

ॐ शान्तिः शान्तिः शान्तिः ।।

सलीलमखिलं जलं चुलुकयेदयं वारिधेः
जगद्ग्रसितुमुल्वणं कवलयेच्च दावानलम् ।।
हरेद्दशनतो हरेर्दशनकोटिमुद्यत्क्रुधो–
यदीयकरुणाश्रयस्तमिह राममीशं श्रये ।। १ ।।

आराध्यं ब्रह्मरुद्रादेर्जगद्धेतुं च मुक्तिदम् ।
दिव्यदेहं गुणाम्भोधिं रामं ब्रह्म समाश्रये ।।२।।

सूत्रवृत्तिकृतौ नत्वा व्यासबोधायनौ मुनी ।
श्रीमन्तं राघवानन्दाचार्यं गुरुं नमाम्यहम् ।।३।।

कुर्वे गुरुं नमस्कृत्य ज्ञानभक्तिदयानिधिम् ।
छान्दोग्योपनिषदो हि भाष्यमानन्दसंज्ञकम् ।।४।।

ननु "मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । "नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहीर्षयेति" वृद्धैः कथनात् काम्यनिषिद्धे कर्मणी वर्जनीये नित्यनैमित्तिके कर्मणी च कृत्वा मुमुक्षोर्वर्त्तमानदेहानन्तरे पुनर्देहान्तर-

## प्रथमाध्यायस्ये प्रथमः खण्डः

**ॐमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥१॥**

**एषां भूतानां पृथिवी रसः पृथिव्या आपो रसोऽपामोषधयो**

प्रतिपत्तिकारणाभावादनायासतो ज्ञानमन्तरेणापि मोक्षसिद्धौ कथं तादर्थ्येनोपनिषदारभ्यते इति चेत्, न ब्रह्मात्मकत्वज्ञानादृते मोक्षप्राप्तेरसम्भवात्। तदुक्तम्—"अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति विपर्यये च स्वराड् भवति" तस्माद् ब्रह्मज्ञानौपयिकं कर्माङ्गविषयकमादौ उपासनस्योपदेशमेव विधीयते (ओमित्येतदित्यादि)। ओमित्येतदुपासीत ओंकारस्योपासनं कुर्यात्। "तस्य वाचकः प्रणवः" इति पतञ्जलोक्तेः। ओमित्येतदक्षरं परमात्मनः प्रियं नेदिष्ठमभिधानम्। उद्गीथः। उद्गीथभक्त्यवयवत्वादुद्गीथशब्दवाच्यमोमित्येतदक्षरमुपासीत। कर्माङ्गावयवभूते परमात्मप्रतीके ओंकार एकाग्रस्वरूपां बुद्धिमुत्पादयेत्। तत्र ओंकारस्योद्गीथशब्दप्रतिपाद्यत्वे श्रुतिः स्वयमेव कारणं दर्शयति। (ओमिति ह्युद्गायति)। लोकेऽपि ओमित्यारभ्यैवोद्गानं करोति। "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः। प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्।" "ब्राह्मणः प्रणवं कुर्यादादावन्ते च सर्वदा। श्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते।" "ओमिति ब्राह्मणः प्रवक्ष्यन्नाह" इत्यादि श्रुतेश्च। अतः ओंकास्योद्गीथावयवत्वादुक्तशब्दवाच्यत्वं युक्तमेवेत्यर्थः। तस्योपव्याख्यानम्। तस्य ओं अक्षरस्योंकारस्योपव्याख्यानमेवम्भूतमुपासनमेवं विभूतिरेवम्भूतं फलमित्यादि कथनं प्रवर्त्तत इति शेषः ॥१॥

तदेवोंकारस्योपव्याख्यानमनुवर्तयन्नक्षरात्मकौंकारस्य रसतमत्वादिगुणमाधातुमाह (एषामित्यादि)। एषां परिदृश्यमानानां भूतानां स्थावरजङ्गमात्मकप्राणिनां पृथिवी चराचराधारलक्षणा रसः परायणमाधारः सर्वेषां पृथिव्याधारत्वादिति। पृथिव्या आपो रसः पृथिव्या जलप्रकृतिकत्वेन कार्यस्य कारणाश्रितत्वात्। अपामोषधयो रसो जलपरिणामरूपत्वादोष-

**रस ओषधीनां पुरुषो रसः पुरुषस्य वाग्रसो वाच ऋग्रस ऋचः साम रसः साम्न उद्गीथो रसः ॥२॥**

**स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः ॥३॥**

**कतमा कतमर्क्कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥४॥**

धीनाम् । ओषधीनां पुरुषो रसोऽन्नजन्यत्वात् पुरुषशरीरस्येति । (पुरुषस्य वाग्रसः) पुरुषावयवानां हस्तपादादीनां मध्येऽतिशयेनोपकारकत्वेन सर्वावयवापेक्षया वाचो वाण्याः प्रधानतया वाक् पुरुषस्य रसः कथ्यते । (वाचो ऋग् रसः) ॥ ऋचां गंभीरार्थत्वेन वाचः सारतया ऋचो व्यपदेशो भवति । (ऋचः सामरसः) साम्नो गीतिप्रधानत्वेन ऋचः सारतया तस्य साम्नो व्यपदेशो भवति । (साम्न उद्गीथो रसः) साम्नामपि रसः सारः श्रव्यत्वात् सारः । अत्र सारतरतयोपात्तोद्गीथशब्देनोद्गीथावयव ओंकार उच्यते । तेन सर्वापेक्षया ओंकारः सार इति ॥२॥

(स एषः) सर्वत्र प्रसिद्ध उद्गीथावयवभूत ओंकारः (रसानां रसतमः) तत्र रसानां भूतादिसामपर्यन्तरसामानाम्मध्ये रसतम उत्तरोत्तरमतिशयेन रसः । अत एव परमः सर्वरसापेक्षया उत्कृष्टः । एतस्मादधिकोऽन्यो रसो नास्तीत्यर्थः । परार्ध्यः परस्य रामाख्यब्रह्मणोऽर्धं स्थानमर्हतीति परार्ध्यः । वाच्यवद् वाचकस्यौंकारस्याप्युपास्यत्वादिति । (अष्टमः) अयमुद्गीथावयव ओंकारोऽष्टमः । पृथिवीरसस्तस्यापो रस इति-रसगणनायामष्टमस्थानभागित्यर्थः ॥३॥

कतमा कतमार्क्, ऋक् किंस्वरूपा ? किंलक्षणेति प्रश्नः । वाचः ऋग् रस इति कथितम् । तत्र जिज्ञास्यते केयम् ऋगित्यर्थः । वीप्सा आदरार्था द्रष्टव्या । एवं किमिदं सामं कश्चासौ उद्गीथ इति प्रश्नः । यद्यपि ऋगादिजातित्वादुत्वाभावात् । डतमच्प्रत्ययप्रयोगो न शोभते तथापि

**वागेवर्क् प्राणः सामोमित्येतदक्षरमुद्गीथस्तद्वा एतन्मिथुनं यद्वाक् च प्राणश्चर्क् च साम च ॥५॥**

**तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे संसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥६॥**

जातौ परिपरिप्रश्नो जातिपरिप्रश्न इत्येतस्मिन् विग्रहे जातौ ऋगादीनां बहुत्वोपपत्त्या डतमचोऽनुपपत्त्यभावादिति । इति विमृष्टम्भवति विमर्शो विचारः कृतो भवतीति मन्त्रार्थः ॥४॥

विचारजन्यमर्थमाह श्रुतिः (वागेवेत्यादि) वागेव ऋक् । येयं वाक् सैव ऋक् । ऋचो वागीन्द्रियोच्चारणनिष्पन्नत्वात् । तथा सामगानस्य श्वासप्रश्वासात्मकप्राणधारणजनितत्वात् प्राण एव साम । तथा ओमित्येतदक्षरमुद्गीथ उद्गीथभक्त्यवयवत्वात् । ओमित्यक्षरमेव उद्गीथ इति भावः ॥५॥

(तद्वा एतन्मिथुनं) तदेतन्मिथुनं यत् वाक् च प्राणश्च । अत्र वाचः स्त्रीलिङ्गशब्दबोध्यतया स्त्रीत्वम् । प्राणस्य च पुंल्लिङ्गशब्दप्रतिपाद्यतया पुंस्त्वम् । एवं ऋक् च साम चैतदपि मिथुनम् । तदेतन्मिथुनम् ओमित्येतदस्मिन्नक्षरे अक्षरस्वरूप ओंकारे संसृज्यते संबद्ध्यते । एवं सर्वकामावाप्तिगुणविशिष्टमिथुनमोंकारसंबद्धं विद्यते । तस्मात्सर्वकामावाप्तिगुणवत्वं प्रसिद्धं भवति । यदा यस्मिन् काले वै खलु मिथुनौ समागच्छतः सम्मिलितौ भवतस्तदा तावन्योन्यस्य कामम् आपयतः प्रापयतः । यथा लोके मिथुनावयवौ स्त्रीपुरुषौ समागच्छतः संयुज्येयातां तदा आपयतः प्रापयतस्तदा तौ द्वौ परस्परस्य कामं प्रयच्छतः तथा च स्वावयवप्रविष्टेन मिथुनेन सर्वकामावाप्तिगुणवत्वमोंकारस्य प्रसिद्धं भवतीति ॥६॥

तदुद्गीथावयवोंकारस्योपासकोऽप्युद्गाता ओंकारधर्मा भवति । तत्राह (आपयितेत्यादि) ओंकारस्योपासक आपयिता ह वै कामानां यजमानस्य भवति।

**आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥७॥**

**तद्वा एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाहैषो एव समृद्धिर्यदनुज्ञा समर्द्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥८॥**

**तेनेयं त्रयी विद्या वर्त्तते ओमित्याश्रावयत्योमिति शँसत्योमित्युद्गायत्येतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन ॥९॥**

यो विद्वान् उद्गाता एतदक्षरमोंकारमेवमवाप्तिगुणमुद्गीथमुपास्ते उद्गीथोपासनं करोति । तस्यैतद्यथोक्तं फलं भवति । कामाप्त्यादिविशिष्टोद्गीथावयवोपासनस्य यजमानगतकामप्राप्तिरेव फलं भवतीति भावः ॥७॥

सोऽयमोंकारः समृद्ध्यादिगुणवानपि तत्राह (तद्वेत्यादि) तद्वा एतदनुज्ञाक्षरम् । अयमोंकारोऽनुज्ञाक्षरमित्यर्थः । तदेव दर्शयति (यद्धीत्यादि) यद्धि किञ्च=लोके यत्किञ्चिद् धनं ज्ञानादिकं वा अनुजानाति धनी विद्वान् वा तत्रानुज्ञामतिं कुर्वन्पुरुषः ओमित्येव तदाह ओमित्यनुजानातीत्यर्थः । तथा च लोकेऽपि तवेदं धनादिकं गृह्णामीत्युक्ते ओमित्याह । अतः एषा उ एव समृद्धिर्यदनुज्ञा लोके समृद्धिमानेव हि ओमित्यनुज्ञां ददाति । ततोऽनुज्ञारूपस्योंकारस्य समृद्धिमूलत्वात् । अनुज्ञालक्षणक ओंकार एव समृद्धिरित्यर्थः । यथोक्तक्रमेण समृद्धिगुणविशिष्टोंकारोपासनायाः फलं दर्शयति (समर्द्धयितेत्यादि) समर्द्धयिता ह वै यजमानस्य कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते इति ॥८॥

उपास्यस्यौंकारस्य प्ररोचनार्थं स्तुतिं करोति (तेनेयमित्यादि) तेन प्रक्रान्तेन उपास्येन ओमित्यकारकाक्षरेण । इयं प्रत्यक्षसन्निहिता त्रयीविद्या ऋक्यजुःसामलक्षणा । वेदप्रतिपाद्यं कर्म वर्तते प्रवर्तते भवतीत्यर्थः ।

तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥१०॥

इति छान्दोग्योपनिषदः प्रथमाध्यायस्य प्रथमः खण्डः ॥१॥

एतदेव दर्शयति (ओमित्यादि) ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति उद्गाता। आश्रवणशंसनोद्गानानामोंकारपूर्वकत्वादित्यर्थः। कथमोंकारपूर्वकमेवाश्रवणादिकं करोति। तत्राह (एतस्यैवेत्यादि) रसेन सारभूतेन महिम्ना माहात्म्येन युक्तस्य एतस्य ओंकारस्वरूपस्याक्षरस्यापचित्त्यै पूजार्थं सोमयागादिकं कर्म क्रियते इति ॥९॥

अथ अविद्वानपि कर्म करोति इति निरर्थिका विद्येति चेत्। यद्यपि विद्वान् अविद्वांश्च लोके कर्म करोति ओंकारेण तथापि विद्याविद्ये परस्पर विलक्षणफलवत्यौ। विद्यापूर्वकं क्रियमाणं कर्म वीर्यवत्तरं भवति। अविद्यापूर्वकं तु न वीर्यवत्तरं भवतीत्याशयेनाह (तेनेमौ इत्यादि) तेनाक्षरेण। उभौ यो हि एतदक्षरं यथाव्याख्यातं जानाति यश्च कर्ममात्रविद् अक्षरयाथार्थ्यं न जानाति तावुभौ कुरुतः सम्पादयतः कर्म। नाना तु विद्या चाविद्या च। तत्र नानाविलक्षणफले इत्यर्थः। यदेव कर्म विद्यया उपासनया करोति सम्पादयति। श्रद्धयोपनिषदा। तत्र श्रद्धा आस्तिक्यबुद्धिः। अत्रोपनिषच्छब्देनोपनिषज्जनितं ब्रह्मात्मकत्वज्ञानं कथ्यते। ततश्च विद्यादिभिः सहितं यदेव कर्म क्रियते तदेव कर्म वीर्यवत्तरं भवति। प्रबलकर्मान्तरेणापि प्रतिबद्धफलकं न भवतीति। इति एवंप्रकारेण। खलु इति निश्चये। एतस्याक्षरस्य ओंकारस्योपव्याख्यानं माहात्म्यप्रदर्शनं भवतीति ॥१०॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य प्रथमः खण्डः ॥१॥

Scanned by CamScanner

## अथ प्रथमा अध्याये द्वितीयः खण्डः

**देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमा-जह्रुरनेनैनानभिभविष्याम इति ॥१॥**

**ते ह नासिक्यं प्राणमुद्गीथमुपासाञ्चक्रिरे तँ हासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धिक पाप्मना ह्येष विद्धः ॥२॥**

अथोद्गीथावयवलक्षण ओंकारे मुख्यप्राणदृष्टिं कर्तुमिमामाख्यायिकां दर्शयति (देवासुरा इत्यादि) प्राजापत्याः प्रजापतेः कर्मज्ञानाधिकृतपुरुषस्या-पत्यलक्षणा उभये द्विप्रकारकाः प्रजापतिसुताः देवा असुराश्च । तत्र देवाः शास्त्रोद्भासिता इन्द्रियवृत्तयः । असुरास्तद्विपरीतास्तामसवृत्तयः । 'ह वै' इमौ निपातौ प्रसिद्धार्थकौ । यत्र यस्मिन् काले परस्परं संयेतिरे संग्रामं कृतवन्त एकोऽपरमभिभवितुम् । तद्ध देवाः । तत् तदाह । प्रसिद्धं यथा तथा देवाः शास्त्रोद्भासिता वृत्तयः उद्गीथमुद्गीथावयवमोंकारमाजह्रुरा-हृतवन्तः । स्वीकृतवन्त इत्यर्थः । कथमाजह्रुस्तत्राह (अनेनेत्यादि) अनेन उपासितेनोद्गीथावयवेनौंकारेणैतानसुरान् तामसवृत्तीनित्यर्थः अभि-भविष्यामः जेष्यामः उद्गीथावयवौंकारमुपास्यत्वेन स्वीकृतवन्त इत्यर्थ इति ॥१॥

ते ह देवा नासिक्यं नासिकायां संजायमानं घ्राणेन्द्रियं प्राणमुद्गीथ-मुद्गीथकर्तारम् उपासांचक्रिरे घ्राणेन्द्रियकत्वेनोद्गीथमुपासितवन्तः इत्यर्थ । तं घ्राणेन्द्रियमुद्गातारं असुराः पाप्मना विविधुः संयोजितवन्तः पापकारण-तामसवृत्त्या संयोजितवन्त इत्यर्थः । तस्मात्पापसम्बन्धकारणात् तेन घ्राणेन्द्रियेण पुरुषः उभयं द्विविधमपि गन्धं जिघ्रति उभयप्रकारकमपि गन्धम-नुभवति । किं तत् द्विविधं तत्राह (सुरभि च दुरभि च) पाप्मना ह्येष विद्धः

अथ ह वाचमुद्गीथमुपासाञ्चक्रिरे ताँ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति सत्यञ्चानृतं च पाप्मना ह्येषा विद्धा ॥३॥

अथ ह चक्षुरुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् ॥४॥

अथ ह श्रोत्रमुद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयँ शृणोति श्रवणीयश्चाश्रवणीयश्च पाप्मना ह्येतद्विद्धम् ॥५॥

अथ ह मन उद्गीथमुपासाञ्चक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयँ संकल्पयते सङ्कल्पनीयञ्चासङ्कल्पनीयश्च पाप्मना ह्येतद्विद्धम् ॥६॥

अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाञ्चक्रिरे तं

यस्मात्कारणात् एषो नासिकायां भवः प्राणः पाप्मना विद्धः तस्मादुभयमपि जिघ्रतीति शेषः ॥२॥

द्वितीयमंत्रवदेवैतेषामपि व्याख्यानं ज्ञातव्यम्। एतावानयं विशेषः तत्र अदर्शनीयमपवित्रम्। अश्रवणीयं पापप्रयोजकं वचनम्। असंकल्पनीयमनभिमतं पापादिकमिति ॥३–४–५–६॥

अथानन्तरम् प्राणादीनामसुरवेधनानन्तरं ते देवा य एवायं मुख्यः प्राणो मुखे भवः प्रसिद्धस्तं मुख्यं प्राणम्। उद्गीथमुपासांचक्रिरे। उद्गीथावयवमोंकारं मुख्यप्राणत्वेनोपासितवन्त इत्यर्थः। तं ह मुख्यं प्राणं ते असुरा ऋत्वा प्राप्य स्वयमेव विदध्वंसुः नष्टा अभवन्। मुख्यं प्राणमपि अहं विद्धं करिष्यामीत्यभिप्रायेण प्रवृत्ता अपि तं प्राणं किञ्चिदप्यकृत्वा स्वयमेव

Scanned by CamScanner

**तं हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वंसेत ॥७॥**

**एवं यथाश्मानमाखणमृत्वा विध्वंसत एवं हैव स विध्वंसते य एवं विदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः ॥८॥**

**नैवैतेन सुरभि न दुर्गन्धि विजानात्यपहतपाप्मा ह्येष तेन**

विनष्टा अभवन्नित्यर्थः । तत्र दृष्टान्तमाह–यथा अश्मानमाखणमृत्वा विध्वंसते । अयं भावः–यथा कोऽपि लोहस्य भेदनाय मृत्पिण्डं लोहं प्रति प्रक्षिपति तत्र न लोहस्य भेदनादिकं भवति किन्तु स्वयमेव मृत्पिण्डादिर्विनष्टो भवति तद्वत् ते असुरा मुख्यप्राणभेदनाय साभिप्रायाः मुख्यं प्राणं सम्प्राप्य स्वयमेव विनष्टा अभवन्निति ॥७॥

एतद्विद्यायाः फलं दर्शयति (यथेत्यारभ्य दासतिपर्यन्तम्) एवं विदि एतद्विद्याविशिष्टे उपासके पुरुषे यः कोऽपि पापं तदनर्हं कर्तुं कामयते इच्छति यश्च कोऽपि एनमभिदासति हिनस्ति आक्रोशताडनादिकं करोति । स एवमेव विध्वंसते विनष्टो भवति यथा अश्मानमाखणमृत्वा प्राप्य विध्वंसते । यस्मात् कारणात् स एषः प्राणोपासकः प्राणभूतत्वात् अश्माखण इव अश्माखणः परैर्धर्षयितुमशक्यो अयोग्यश्चेति । दा प्लवते दो अवखण्डने वा इत्यस्मात् धातोः लटि सिपि बहुलमिति सूत्रेण सिपिकृते अभिदासतीति रूपं भवतीति ॥८॥

अन्यप्राणाद्यपेक्षया मुख्यप्राणस्य वैलक्षण्यं दर्शयति( नैवेत्यादि) एतेन मुख्यप्राणेन लोको न सुरभिगन्धं जानाति न वा दुरभिगन्धमेव विजानाति । तत्राह (अपहतेत्यादि) ह्येषः यस्मात्कारणात् एषो मुख्यप्राणः अपहतपाप्माः । अपहतो विनाशितोऽपनीतः पाप्मा यस्मात् सोऽयं मुख्यः प्राणः अपहतपाप्मा विशुद्धः । अत एव न विजानाति । घ्राणादयो हि आत्मंभरयः प्राणास्तु

यदश्नाति यत्पिबति तेनेतरान् प्राणानवत्येतमु एवान्ततोऽवित्त्वोत्क्रामति व्याददात्येवान्तत इति ॥९॥

तं हाङ्गिरा उद्गीथमुपासाञ्चक्रे एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥१०॥

तेन तं ह वृहस्पतिरुद्गीथमुपासाञ्चक्र एतमु एव बृहस्पतिं मन्यन्ते वाग्घि बृहती तस्या एष पतिः ॥११॥

सर्वार्थः । कथमेवं तत्राह–(तेनेत्यादि) तेन अपहतपाप्मत्वेन मुख्यप्राणेन यदश्नाति यत् पिबति लोकः तेनाशितेन पीतेन च इतरान् घ्राणादीनवति रक्षति । अतो नायं मुख्यः प्राणः आत्मंभरिः किन्तु सर्वार्थः । एतत् । यस्मादेव कारणात् घ्राणादिप्राणसमुदायो मुख्यप्राणाशितपीतलब्धसत्ताकः अत एव अन्ततो मरणसमये सर्वप्राणाशितपीतयोरभावेन । एतमवित्वाऽलब्ध्वा उत्क्रामति शरीरं परित्यज्य गच्छति व्याददात्येवान्तत इति । अन्ततो मरणसमये सर्वप्राणानामुत्क्रमणादेव व्याददाति मुखविदरणं करोतीत्यर्थः ॥९॥

तं मुख्यप्राणम् अङ्गिरातन्नामको ऋषिः उद्गीथम् उद्गीथावयवमोंकारम् उपासांचक्रे उपासनं कृतवानित्यर्थः । अन्ये तु अङ्गिरसोपास्यमेव मुख्यप्राणमङ्गिरसं वदन्तीत्यत्राह (एतमु इत्यादि) एतमु एवाङ्गिरसं मन्यन्ते अङ्गानां यद्रसः अङ्गानां प्राणाधीनस्थितिकत्वेन प्राणस्यांगरसत्वमित्यर्थः । अङ्गरसमंगिरसं वदन्ति परोक्षप्रियत्वाद्देवानामिति ॥१०॥

तेन आंगिरसत्वेन गुणेन तं प्राणं वृहस्पतिमुद्गीथमुपासांचक्रिरे उपासितवन्त इत्यर्थ । एतमु एव वृहस्पतिं मन्यन्ते यतो वाग् हि वृहतीः वागिन्द्रियस्य परोक्षापरोक्षप्रकाशिकाया वृहत्वम् । तस्याः वाण्या एषः प्राणः

**तेन तं हास्यास्य उद्गीथमुपासाञ्चक्र एतमु एवायास्यं मन्यन्त आस्याद्यदयते ॥१२॥**

**तेन तं ह बको दाल्भ्यो विदाञ्चकार। स ह नैमिषीयानामुद्गाता बभूव स ह स्मैभ्यः कामानागायति ॥१३॥**

पतिः। उपर्युक्तवाचः सर्वार्थप्रकाशिकाया मुख्यप्राणाधीनत्वात् प्राणस्य-वाक्पतित्वं सिद्ध्यति। अत उपास्यस्यैव वृहस्पतित्वं मन्यन्ते इत्यर्थः ॥११॥

तेन वृहस्पतित्वेन त प्राणं अयास्यः तन्नामको ऋषिः उद्गीथमुपासांचक्रे उपासनं कृतवानित्यर्थः। एतमु एवायास्यं मन्यन्ते। एतस्मादेव कारणात् इममयास्यं मन्यन्ते। आस्यात् यदयते। यत् यस्मात् आस्यात् मुखात् अयते निर्गच्छतीत्यर्थः ॥१२॥

तेन पूर्वकथितांगिरसत्वेन वृहस्पतित्वायास्यत्वादिगुणगणविशिष्ट-रूपेण तं प्राणम् दाल्भ्यो दल्भनामक ऋषिपुत्रो वको वकनामा ऋषिर्विदाञ्चकार उपासनं कृतवानित्यर्थः। स ह दाल्भ्यो वको ऋषिः नैमिषीयाणां यागकर्तॄणामुद्गाता बभूव आस। स ह स्मैभ्यः कामानागायति। स वको ऋषिः प्राणविज्ञानसामर्थ्यादेव कारणात्। एभ्यो नैमिषीयेभ्यः कामानागायति स्म ह आगीतवान्। अयमर्थः स दाल्भ्यो वको यजमानेभ्यो नैमिषीयेभ्यः शत्रुपराभवादीन् कामान् गानेन प्राणविद्यामाहात्म्यात् सम्पादितवानिति ॥१३॥

आगाता ह वै कामानां भवति। एवमन्योऽपि प्राणोपासकः कामानां यजमानकामानाम् आगाता गानेन सम्पादनकर्ता भवति। यो विद्वान् प्राण-विज्ञानवान् एवं पूर्वोक्तगुणविशिष्टं प्राणमक्षरमुद्गीथमुपास्ते उपासनां करोति तस्यैतद् दृष्टं फलं भवति। इत्यध्यात्मम्। अत्रेति शब्दः समाप्त्यर्थकः आत्मशब्देन च इन्द्रियप्राणादिसंघातः कथ्यते। अध्यात्मं

**आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथ-मपास्त इत्यध्यात्मम् ।। १४ ।। इति छान्दोग्योपनिषदः प्रथमाध्याये द्वित.यः खण्डः ।**

आत्मनि । आत्मविषयमित्यर्थः । तथा च अध्यात्ममुद्गीथोपासनं समाप्तमित्यर्थः ।।१४।।

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
द्वितीयः खण्डः ।।२।।

---

સમરીતિર્જ્ઞદાતેજાઃ પરબ્રહ્મ સનાતનઃ ।
જયતાજ્જ્ઞાનકીનાથો વેદવેદ્યો મહામતિઃ ।।

Arun Nagpal

## अथ प्रथमाध्याये तृतीयः खण्डः

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति उद्यंस्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥१॥**

**समान उ एवायञ्चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीम-**

अथ आध्यात्मिकोद्गीथोपपद्यनानन्तरम् । अधिदैवतं देवतायां देवता-विषयकमुद्गीथोपासनं कथ्यते । य एवासौ सर्वलोकसाक्षिकः सविता तपति तपनक्रियां करोति तं सूर्यमुद्गीथमुपासीत । आदित्यदृष्टया उद्गीथस्यो-पासनं कुर्यात् । कर्माङ्गभूतोद्गीथापेक्षया कर्माराध्यसूर्यस्य ऋषित्वात् । इत्यादित्यदृष्टयोद्गीथस्योपास्यत्वमिति । अक्षरात्मके उद्गीथे अध्यस्य-मानसूर्यस्योद्गीथतुल्यतां दर्शयितुमाह (उद्यन् वेत्यादि) एष आदित्य उद्यन् उद्यत् प्राप्नुवन् प्रजाभ्यो लोकेभ्यः उद्गायति । प्रजानामर्थप्रकाशात्मकं कार्यं कुर्वन् उद्गायनीभवति । उद्गीथोऽपि-लोकानामुद्गायनीभवतीत्यर्थः । उद्यन् सूर्यः प्रजानां तमो भयं अन्धकारमपहन्ति विनाशयतीति । यथोक्तगुण-विशिष्टोद्गीथोपासकस्य फलमाह (अपहन्तेत्यादि) यः कश्चित् उपासक एवं यथोक्तगुणविशिष्टमुद्गीथं वेद जानाति स उपासकोऽपि तमसो भयादेः अन्धकारप्रयुक्तभयस्यापहन्ता विनाशको भवतीत्यर्थः ॥१॥

(समग्रेत्यादि) अयं अध्यात्मप्रकरणकथितः प्राणः तथा-असौ अधिदैवत-प्रकरणकथितः सूर्यश्च समान उमूल्य एव, तत्कथं तत्राह (उष्णोऽयमित्यादि) अयं प्राणः उष्णः उच्छ्वासस्योष्णतया समुपलभ्यमानत्वात् (उष्णोऽसौ) असौ आदित्य उष्णः सूर्योष्णतायाः प्रत्यक्षमुपलभ्यमानत्वात् । स्वर इति समाचक्षते । इममध्यात्मप्रकरणपठितप्राणं स्वर इति आचक्षते कथयति ।

Scanned by CamScanner

**माचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुञ्चोद्गीथमुपासीत ॥२॥**

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति स प्राणो यदपानति सोऽपानोऽथ यः प्राणापानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्ननपानन्वाचमभिव्याहरति ॥३॥**

स्वर इत्यस्य गन्तेत्यर्थः। अमुं सूर्यम् स्वर इति प्रत्यास्वर इत्याचक्षते उदयास्तसमये गमनागमनस्य दर्शनात्। प्राणो हि वायुरूपत्वात् सर्वदागतिशीलत्वेन प्रत्यागमनाभावात् न प्रत्यास्वर इति कथ्यते। अतः उभयोरपि प्राणसूर्ययोरौष्ण्यात् स्वरसंज्ञावत्वाच्च समानत्वमिति। तस्माद्वा—यस्मादुभयोरपि समानत्वम् तस्मात् कारणात् इममध्यात्मं प्राणम्। अमुञ्चादित्यम् एतम् पूर्वोक्तगुणविशिष्टम्। उद्गीथमुपासीत उद्गीथे अध्ययमानं सूर्यमुपासीतेत्यर्थ इति ॥२॥

पुनः प्रकारान्तरेणोद्गीथस्यैवोपासनं दर्शयति (अथ खलु इत्यादि) अथ खलु व्यान एव। प्राणवायोरंगभूतम्। उद्गीथमुपासीत। उद्गीथस्य व्यानत्वेनोपासनं कुर्यादित्यर्थः। व्यानवायोः स्वरूपं दर्शयति (यद्वै इत्यादि) यत् यं वायुं लोको मुखनासिकया प्राणिति बहिर्निष्काशयति स प्राणाख्यो वायोर्वृत्तिविशेषः यदपानति सोऽपानः मुखनासिकाभ्यां यं वायुमन्तराकर्षति स अपानाख्यो वृत्तिविशेषः। अथ यः प्राणापानयोः सन्धिः स व्यानः प्राणापानयोः सन्धौ मध्ये विद्यमानो वृत्तिविशेषो व्यान इत्यर्थः। यो व्यानः सा वाक्। वाण्या व्यानवायुनिर्वृत्यत्वात् वाक् व्यान इत्यर्थः। अत्र हेतुमाह (तस्मादित्यादि) तस्मात् अप्राणन् प्राणक्रियामकुर्वन् अनपानन् अपानक्रियामकुर्वन् वाचमभिव्याहरति वदति। वाण्यादीनां प्राणापानक्रिययोरभावेऽपि दर्शनात् व्यानकार्यत्वं निश्चीयते अतो व्यानमुद्गीथेनोपासीतेति ॥३॥

Scanned by CamScanner

या वाक्सर्क्स्मादप्राणन्ननपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन् साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति ॥४॥

अतो यान्यन्यानि वीर्य्यवन्ति कर्म्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥५॥

अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गीर्वाचो ह गिर इत्याचक्षतेऽन्नं थमन्ने हीदंसर्व्वं स्थितम् ॥६॥

द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थं

सुगमत्वात् न व्याख्यायते ॥४–५॥

अथ खलु उद्गीथाक्षराणामुपासनं प्रदर्श्यते (अथेत्यादि) अथ सम्पूर्णोद्गीथोपासनानन्तरम् उद्गीथाक्षराणि उद्गीथघटकवर्णान् उपासीत उपासनं कुर्यात् । तत्र उत् गी थ इत्यक्षरत्रयं विद्यते । तेषु प्राण एवाध्यात्म उत् । उत् इत्याकारके अक्षरे प्राणदृष्टिः कार्येत्यर्थः । तत्र कारणमाह–(प्राणेन ह्युत्तिष्ठति) प्राणाभावे अवसानदर्शनात् अत उत् शब्दस्य प्राणस्य च समत्वम् । वाग् गीः गीरित्यक्षरे वाग् बुद्धिः कर्तव्येत्यर्थः । तत्र कारणमाह-(वाचो ह गिर इत्याचक्षते) शिष्टाः । अन्नं थम् । थमित्यक्षरे अन्नबुद्धिः कार्या । तत्र हेतुः (अन्ने हीदं सर्वं स्थितम्) अन्नस्य सर्वाधारत्वेन थकारवत्वसमत्वात् थ शब्दे अन्नबुद्धिर्युज्यते ॥६॥

प्रकारान्तरेणोद्गीथाक्षरोपासनं दर्शयति (द्यौरेवात् इत्यादि) उत् इत्याकारके अक्षरे द्युलोकादित्यसामवेददृष्टिः कर्तव्या । गौरित्याकार-

सामवेद एवोद्यजुर्वेदो गीः ऋग्वेवस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वानुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥७॥

अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात्तत्सामोपधावेत् ॥८॥

यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोस्यन् स्यात्तां देवतामपधावेत् ॥९॥

येन छन्दसा स्तोष्यन् स्यात्तच्छन्द उपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात् तं स्तोममुपधावेत् ॥१०॥

काक्षरे अन्तरिक्षवायुयजुर्वेददृष्टिः कर्तव्या । थमित्याकारके पृथिव्यग्नि-ऋग्वेददृष्टिश्च कर्तव्येत्यर्थः । उक्तोपासनस्य फलं दर्शयति (दुग्धे इत्यादि) वागस्मै उपासकाय दोहन्दोग्धि । किमात्मकं दोहं तत्राह (यो वाचो दोहः) वाणीसाध्यं फलमित्यर्थः । फलान्तरमपि दर्शयति (अन्नवानित्यादि) अन्न-बहुलः प्रदीप्तजाठराग्निश्च भवति । तदुक्तं (भोज्यं भोजनशक्ति-श्चेत्यादि) ॥७॥

अथेत्यादितत्राशिषः समृद्धश्च कारणभूतानि उपसरणानि उपासनानीति मत्वा उपासनं कर्तव्यमित्यर्थः । केषामुपासनं कर्तव्यं तत्राह (येन—धावेदीति) धावेत् चिन्तयेदुपासीतेत्यर्थः एवं सर्वत्र ज्ञातव्यम् ।

अथ सामादिध्यानानन्तरम् अन्ततः अन्ते आत्मानमपि उपसृत्य स्तुवीत ध्यानं कुर्यादित्यर्थः । तदनन्तरं काममात्मनोभिलषितमिष्टं ध्यायन् अप्रमत्तोऽवहितः स्वरोष्मव्यंजनादिभ्यः प्रमादमकुर्वन् । यदस्मै यत्कामनया एव वित् स्तोत्रं करोति स कामो यस्मात् कारणात् अभ्याशः क्षिप्र समृद्धयेत

Scanned by CamScanner

यां दिशमभिष्टोष्यन् स्यात्तां दिशमुपधावेत् ॥११॥

आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥१२॥

इति छान्दोग्योपनिषदः प्रथमाध्यायस्य तृतीयः खण्डः ॥३॥

समृद्धिं गच्छेत् । यत्कामः स्तुवीत यत्कामः स्तुवीत इति द्विरुक्तिरादरार्था खण्डसमाप्तिद्योतिका चेति ॥८–९–१०–११–१२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य तृतीयः खण्डः ॥३॥

---

## अथ प्रथमाध्याये चतुर्थः खण्डः

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥१॥

देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम् ॥२॥

एतस्यार्थः पूर्ववदेव ज्ञातव्यः । अत्रोद्गीथोपासनस्य प्रकृतस्य पुनः कथनं मध्ये उद्गीथाक्षराद्युपासनान्तरितत्वादिति ॥१॥

देवा वै मृत्योर्बिभ्यतः त्रयीं विद्यां प्राविशन् मरणभीतास्ते देवा मरणभयात् विमुक्त्यर्थं वैदिकं कर्म कुर्वन्तोऽभवन्नित्यर्थः । ते छन्दोभिराच्छादयन् । ते देवा मृत्युभीताः सन्तः छन्दोभिः कर्मविनिर्मुक्तैर्वैदिकमन्त्रैरात्मानं छादितवन्तः । वैदिकमंत्रकवचावगुण्ठिता अभवन्निति । यदेभिरात्मानमाच्छादयन् यत् छन्दसां छन्दस्त्वमिति ॥२॥

तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्य्यपश्यदृचि साम्नि यजुषि तेनु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥३॥

यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येवं सामैवं यजुरेष उस्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥४॥

स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षरं स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥५॥

इति छान्दोग्योपनिषदः प्रथमाध्यायस्य चतुर्थः खण्डः ॥४॥

ततो मृत्युः तान्देवान् कर्मरतान् यथा मत्स्यग्राही मत्स्यमुदके जले परिपश्येत् एवं मृत्युः वेदविहितकर्मणि अनुप्रविष्टान् कर्मवैगुण्यसमयं प्रतीक्ष्य ग्रहीतुमैच्छत् । ततो देवा मृत्योश्चिकीर्षितं ज्ञात्वा ऊर्ध्वाः कर्मनिवृत्ताः सन्तः ऋचः साम्नः यजुषः स्वरमेव प्राविशन् । वेदविहितकर्मानुष्ठानं परित्यज्य ओंकारोपासनायां निरता अभवन्नित्यर्थः ॥३॥

यदा यस्मिन् काले वा ऋचमाप्नोति ऋगादिकमध्ये तु प्रवृत्तो भवति तदैवातिस्वरति ओमिति शब्दं करोति । एवं साम एवं यजुः । एष उ स्वरः तस्मात्कारणात् ओंकार एव स्वरः यदेतदक्षरममृतमभयं ओंकाराक्षरं तत्प्रविश्य तदुपासनं कृत्वा देवा अमृता अमृता अभया अभवन् ॥४॥

स य एतदेवं विद्वान् अभयादिगुणविशिष्टमक्षरमोंकारं प्रणौति अक्षरस्य स्तुतिं करोति स एतदेवाक्षरं स्वरममृतमभयं प्रति । तत्प्रविश्य तदुपासनं कृत्वा यथा देवा अमृता अभवन् तथा सोऽपि अमृतो भवतीति ॥५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
चतुर्थः खण्डः ॥४॥

Scanned by CamScanner

## अथ प्रथमाध्याये पंचमः खण्डः

**अथ खलु य उद्गीथः स प्रणवो यः प्रणव, स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ॐमिति ह्येष स्वरन्नेति ॥१॥**

**एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकि पुत्रमुवाच रश्मींस्त्वं पर्य्यावर्त्तयाद्बहवो वै ते भविष्यन्तीत्यधिदेवतम् ॥२॥**

ओंकारोद्गीथयोरेकत्वविज्ञानमनेकपुत्रादिफलकमुपदर्शयति (अथ इति) अथ खलु य उद्गात्रा प्रयुज्यमानः उद्गीथ उद्गीथावयव ओंकारः सप्रणवः स एव होत्रा प्रयुज्यमानः प्रणव ओंकारः यः प्रणवः स उद्गीथः यः खलु होत्रा प्रयुज्यमानः प्रणवः स एवोद्गात्रा प्रयुज्यमान उद्गीथावयव ओंकार एवं क्रमेणोभयोः परस्परमैक्याध्यासः करणीय इति। एवं प्रकारेण प्रणवोद्गीथयोरैक्यं कृत्वा तत्रादित्यदृष्टिमुपदिशति (असौ प्रणवः इत्यादि) असौ वा आदित्य उद्गीथ एष प्रणवः आदित्यस्य कथं प्रणवस्वरूपत्वं तत्राह (ओमित्यादि) एष आदित्यः ओमिति स्वरन् उच्चारयन् कर्तव्यकर्मणाम् ओमित्यनुज्ञां कुर्वन् एति उदेति। अत असौ आदित्य उद्गीथरूपः प्रणवरूपश्चेति ॥१॥

एतं प्रत्यक्षपरिदृश्यमानमादित्यमेवोद्गीथमहमभ्यगासिषं गीतवानस्मि। न तु बहुरश्मिगुणविशिष्टतयोपासितवानस्मि। तस्मात् कारणात् तेन दोषेणेत्यर्थः। मम त्वमेक एव पुत्रोऽसि अभूः इति ह इत्येवंरूपेण कौषीतकिः तन्नामा ऋषिः स्वपुत्रमुवाचोक्तवान्। रश्मींस्त्वंप र्यावर्तयात्। तस्मात्कारणात् बहुरश्मिविशिष्टादित्यविज्ञानां वृत्तिं त्वं कुरु। बहवस्ते भविष्यन्ति ते तव रश्मिबहुत्वमहिम्ना बहवः पुत्रा भविष्यन्तीत्येवं पुत्रमुवाचेत्यधिदैवतम् उपदिष्टमिति ॥२॥

Scanned by CamScanner

अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीतोमिति ह्येष स्वरन्नेति ॥३॥

एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणांस्त्वं भूमानमभिगायताद्बहवो वै मे भविष्यन्तीति ॥४॥

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥५॥

इति छान्दोग्योपनिषदः प्रथमाध्यायस्य पञ्चमः खण्डः ॥५॥

अथाध्यात्मम् अधिदैवतानन्तरमध्यात्ममुपदिश्यते (य एवायमित्यादि) अर्थस्तु पूर्ववदेव कर्तव्यः । (ओमिति) एषः प्राणः प्राणः वागादि ओमित्यनुज्ञां कुर्वन्निव एति संचरति तस्मात् प्राण एव प्रणव उद्गीथश्चेति ॥३॥

(एतमु इत्यादि) पूर्ववदेवार्थो ज्ञातव्यः। (प्राणांस्त्वमित्यादि) मे मम बहवः पुत्रा भविष्यन्तीत्यभिसंधाय अनेकत्वेन त्वं तदुद्गानं कुरु इति ॥४॥

प्रणवोद्गीथैकत्वविद्याफलं दर्शयति—(अथ समाहरतीति) अथ खलु पूर्ववदेवार्थः अपि दुरुद्गीथं—वेदनरहितमप्युथ्गीथम् होतृवदनात् होतृकर्तृकोद्गीथप्रणवयोरैक्यविज्ञानात् । अयमर्थः उद्गीथप्रणवैकत्वविज्ञानं होत्रा-उद्गात्रापि संपादनीयम् । तत्र प्रणवे होतुः उद्गीथे उद्गातुश्च कर्तृत्वम् । तत्रोद्गातुरेतादृशैकत्वविज्ञानाभावेन दोषसहितमप्युद्गात्रा प्रयुज्यमानमुद्गीथं होता स्वकीयोद्गीयप्रणवैकत्वविज्ञानमाहात्म्यादनुसमाहरति अदुष्टं करोति । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य पञ्चमः खण्डः ॥५॥

## अथ प्रथमाध्याये षष्ठः खण्डः

इयमेवर्गग्निः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते इयमेव साऽग्निरमस्तत्साम ॥१॥

अन्तरिक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयतेऽन्तरिक्षमेव सा वायुरमस्तत्साम ॥२॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते द्यौरेव साऽऽदित्योऽमस्तत्साम ॥३॥

नक्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते नक्षत्राण्येव सा चन्द्रमा अमस्तत्साम ॥४॥

इयमेव प्रत्यक्षेण परिदृश्यमाना सर्वाधारभूता पृथिव्येव ऋक् । अर्थात् ऋचिं पृथिवीदृष्टिः कर्तव्या । अग्निः साम–साम्नि अग्निदृष्टिः कर्तव्येत्यर्थः । तदेतत् अग्न्याख्यं साम एतस्यां पृथिवीलक्षणायां ऋचि अध्यूढमधिगतम् उपरिस्थितमित्यर्थः साम । अत एवाद्यापि सामगैः ऋगारूढमेव साम गीयते । तदेव दर्शयति (तस्मादिति) तस्मादृच्यधिरूढ साम गीयते । एवं प्रकारेण ऋक्सामयोः पृथिवीदृष्टिमग्निदृष्टिं च विधाय सामनामावयवभूतयोः सा शब्द-अम शब्दयोरपि पृथिवीदृष्टिमग्निदृष्टिं दर्शयति । इयमेव सा इयमेव पृथिवी सा । सामनार्धशब्दबोध्या । अग्निरमः अमशब्दवाच्योऽग्निः । तत् साम । तत् तत एव परस्परसम्मिलित्तपृथिव्यग्निरूपः सा शब्द-अम शब्दमेलनेन सामव्यवहारो लोके भवतीति ॥१॥

द्वितीयादिचत्वारो मंत्राः पूर्ववदेव व्याख्यातव्याः (अथ यदेतदित्यादि) शुक्लेमाः शुक्लादीतिरित्यर्थः । अथ–सामः परः कृष्णम् ।

अथ यदेतदादित्यस्य शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते ॥५॥

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व्व एव सुवर्णः ॥६॥

तस्य यथा कप्यासं पुंडरीकमेवमक्षिणी तस्योदिति नाम स एष सर्व्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्व्वेभ्यः पाप्मभ्यो य एवं वेद ॥७॥

अतिशयेन कार्ष्ण्यंरूपम् । परं कृष्णमिति प्रसिद्धं यत् नीलं तत्रास्तीति । तत्सामेति पूर्ववत् ॥२–३–४–५॥

पूर्वोक्तप्रकारेण ऋचि पृथिव्यन्तरिक्षद्युनक्षत्र – आदित्यगत–शुक्लभारूपत्वदृष्टिं, साम्नि च अग्निवायु-आदित्यचन्द्र-आदिगतनीलभारूपत्वदृष्टिञ्चोपदिश्याह–(अथेत्यादि) अथ यः एषः = परविद्याप्रवीणैर्योगिभिर्दृश्यमानतया प्रसिद्धो यः परमात्मा स एव सम्प्रति दृष्टयर्थं गृह्यते इति । अन्तरादित्ये आदित्यमण्डलमध्ये हिरण्मयः अतिरमणीयो दृश्यते योगिभिः स पुरुषो हिरण्यश्मश्रुः रमणीयश्मश्रुकेशः आप्रणखात् सर्वं एव सुवर्णः रमणीयसर्वावयव इत्यर्थः ॥६॥

तस्य अक्षिणी तच्च कं जलं पिबतीति कापः सूर्यः तेनास्यते क्षिप्यते इति कप्यासम् । मर्कटास्यमिति व्याख्यानं तु अश्लीलत्वात् न शोभनम् । तस्योदिति नाम । तस्य उत् नामकत्वे कारणं दर्शयति (स एव इत्यादि) सर्वपापरहितत्वात् उन्नामकः परमात्मा । रागद्वेषाभावेन पापपुण्ययोस्तत्राभावात् (उदेतीत्यादि) स्पष्टार्थः ॥७॥

Scanned by CamScanner

**तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथतस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥८॥**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य षष्ठः खण्डः ॥६॥**

(तस्य ऋचेत्यादि) ऋक् सामे तस्य गेष्णौ गानरूपे एतावता सर्वात्मकत्वं परमात्मनः समर्थितम् । तस्मादुद्गीथः गाता । यस्मात् उत् नामकत्वं परमात्मनः अत एव तद्गानरूपत्वात् द्वितीयभक्तेः उद्गीथसंज्ञत्वम् । तद्गानकर्तुश्च उद्गातृसंज्ञा च भवतीति अथवा परमात्मैव उद्गीथः तत् उद्गीथे परमात्मदृष्टिर्युक्तैवेति । अधिदैवतं उपासनं च दर्शितम् ॥८॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
षष्ठः खण्डः ॥६॥

---

## अथ प्रथमाध्याये सप्तमः खण्डः

**अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते वागेव सा प्राणोऽमस्तत्साम ॥१॥**

**चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते चक्षुरेव साऽऽत्माऽमस्तत्साम ॥२॥**

(वागेवर्क्) तत्साममंत्रचतुष्टयं सर्वं पूर्वदेव व्याख्यातव्यं पुनरुक्तिभयान्न व्याख्यायते । यथोक्तप्रकारेण ऋचि वाक् चक्षुः श्रोत्र अक्षिगत-शुक्लभारूपत्वदृष्टिम् । साम्नि च प्राणछायात्ममनोऽक्षिगतपरः-

श्रोत्रमेवर्ङ्मनः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम ॥३॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमस्तत्साम ॥४॥

अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम ॥५॥

स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानाञ्चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्ते धनसनयः ॥६॥

कृष्णरूपत्वदृष्टिं च सम्पादनायाह (अथ यः ब्रह्मेति) अथ य एषोऽन्तरक्षिणि चक्षुर्मध्ये पुरुषो दृश्यते योगिभिः स ऋक्यजुःसामात्मा उक्थादिरूपो ब्रह्म चापीति । (तस्येत्यादि) तस्यैतस्य चक्षुर्गतपरमपुरुषस्य । आदित्यमध्यवर्तिपुरुषस्य यत् हिरण्मयत्वादिरूपम् उदितिनामऋक्सामरूपगेष्णौ चैतानि सर्वाण्येव भवन्तीत्यर्थः ॥१।२।३।४।५॥

(स एष इत्यादि) स एष चक्षुषः पुरुषः ये चैतस्मात् अक्षिस्थानात् अर्वाचः अधोवर्त्तिनः लोकाः तेषामीष्टे मनुष्यकामानामीष्टे नियन्ता भवतीत्यर्थः । तद् यः यस्मादयमीश्वरस्तस्मात् ये पुरुषा वीणायां गायन्ति गानं कुर्वन्ति ते एतमीश्वरमेव गायन्ति । यस्मादीश्वरमेव ते गायन्ति तस्मात् ते गायका धनसनयः धनलाभयुक्ता भवन्ति । ईश्वरगायकत्वादेव वीणागायकानां धनप्राप्तिः न ह्यनीश्वरगायकत्वे धनप्राप्तिः सम्भवतीति ॥६॥

Scanned by CamScanner

**अथ य एतदेवं विद्वान् साम गायत्युभौ स गायति । सोऽमुनैव स एष ये चामुष्मात्पराञ्चो लोकास्तांश्चाप्नोति देवकामांश्च ॥७॥**

**अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति मनुष्यकामांश्च । तस्मादु हैवं विदुद्गाता ब्रूयात् ॥८॥**

**कं ते काममागायानीत्येष ह्येव कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥९॥**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य सप्तमः खण्डः ॥७॥**

अथ यः एतमेवं यथोक्तं देवमुद्गीथं साम गायति उद्गानं करोति स उभौ गायति चाक्षुषमादित्यं च गायति । तस्यैवं विदः फलमुच्यते—(सोऽमुनैव) स विद्वान् अमुना आदित्यमण्डलवर्तिना उपासितेन स एषः तदुपासनाविशिष्टः अस्मात् पराञ्चो लोका ऊर्ध्वलोकाः तान् प्राप्नोति देवकामांश्च प्राप्नोति ॥७॥

अथानेनैव चाक्षुषेणैव ये चैतस्मात् अर्वाञ्चो लोकास्तान् प्राप्नोति मनुष्यकामानपि प्राप्नोति । तस्मादु=एवं वित् उद्गाता यजमानं प्रति ब्रूयात् वदेत् ॥८॥

कं ते इष्टं कामम् उद्गायति एष कामगानस्येष्टे उद्गानेन गानेन कामं सम्पादयितुं समर्थः । क एवं सामर्थ्ययुक्तः तत्राह ( य एवमित्यादि) य एवं विद्वान् साम गायति । द्विरुक्तिः खण्डसमाप्त्यर्थेति ॥९॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
सप्तमः खण्डः ॥७॥

---

Scanned by CamScanner

## अथ प्रथमाध्याये अष्टमः खण्डः

त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मो हन्तोद्गीथे कथां वदाम इति ॥१॥

तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति ॥२॥

स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच ॥३॥

का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति

प्रकारान्तरेणोद्गीथोपासनं वक्तुमाख्यायिकां दर्शयति । (त्रयो—जैवलिरिति) शालावत्सुतः नाम्ना शिलक दल्भगोत्रश्चैकितायनपुत्रः जीवलसुतः नाम्ना प्रवाहणः एते त्रय उद्गीथविज्ञाने कुशला बभूवुरित्यर्थः ते—वदाम । एते वयमुद्गीथविज्ञानेनिपुणा भवामः अतो विद्यादाढर्याय परस्परं वादकथा कुर्म इत्यूचुरित्यर्थः ॥१॥

(तथेत्यादि) तथा वयं कुर्म इति परस्परमुक्त्वा एकत्र समुपविष्टवन्त इत्यर्थः ( सहेत्यादि ) तत्र प्रवाहणः क्षत्रियः तौ ब्राह्मणौ प्रागल्भ्यादुवाचेति । भगवन्तौ पूजनीयौ ब्राह्मणौ अग्रे प्रथमं वदतां वादकथां कुरुताम् अहं तत्प्रकारं श्रोष्यामीति । अन्यत्सर्वं स्पष्टम् ॥२,३॥

शिलकः पृच्छति ( का साम्नो गतिरिति ) तत्र गतिरयनं प्राप्यमित्यर्थः । ततो दाल्भ्यः स्वर इति होवाच स्वरात्मकत्वात्साम्नः यो यदात्मकः स तद्गतिस्तदाश्रयश्च भवति मृदाश्रय इव घटादिरिति भावः। पुनः शिलकः पृच्छति स्वरस्य का गतिरिति । दाल्भ्यः प्राह—प्राण इति होवाच । प्राणनिर्वर्त्यत्वात् स्वरस्येति । प्राणस्य का गतिरिति अन्नमिति होवाच दाल्भ्यः।

Scanned by CamScanner

प्राण इति होवाच प्राणस्य का गतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥४॥

अपां का गतिरित्यसौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामाभिसंस्थापयामः स्वर्गसंस्तावं हि सामेति ॥५॥

तं ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति ॥६॥

हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाचामुष्य लोकस्य का गतिरित्ययं लोक इति होवाच अस्य लोकस्य

अन्नाधीनत्वात् प्राणस्य "शुष्यति वै प्राण ऋते अन्नादिति" श्रुतेः। अन्नस्य का गतिरिति प्रश्ने आप इति होवाच। जलजन्यत्वात् अन्नस्य। ४।

अपां का गतिरिति प्रश्ने असौ द्युलोको गतिरिति होवाच। द्युलोकादेव वृष्टिप्रभवात्। अमुष्य लोकस्य का गतिरिति प्रश्ने उत्तरयति न स्वर्गं लोकमतिनयेदिति होवाच। स्वर्गलोकातिरिक्तं सामगतिं न वदामि स्वर्गं लोकं वयं सामाभिसंस्थापयामः। सामाश्रयतया स्वर्गलोकमेव वयं सम्यक् स्थापयामः। हि यस्मात् कारणात् स्वर्गसंस्तावं हि सामेति "स्वर्गो वै लोकः सामवेद" इति श्रुतेः स्वर्गरूपेणैव साम्नः स्तुतिकरणात् स्वर्गगतिकमेव सामेति वयं निश्चिनुमः ॥ ५ ॥

तं दाल्भ्यं पुनः शिलकः पृच्छति (तं हेत्यादि) अप्रतिष्ठितं वै किल ते साम=अप्रतिष्ठितो हि स्वर्गलोकः तं सामाधारत्वेन मन्यमानस्य तव मते सामापि अप्रतिष्ठितमेव भवेदिति वादकथाया यदि कोऽपि अन्यो वदेत् यत् मूर्धा ते विपतेत् तदा तव शिरःपतनमवश्यमेव स्यात्। अहं तु स्नेहात् न तथा वदामि अतो जीवसीति ॥ ६ ॥

(हन्ताहमेतदिति) हे भगवन् त्वत्तोऽहं सामगतिपरं पराविश्राम-

**का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठासंस्तावं हि सामेति ।।७।।**

**तं ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्द्धा ते विपतिष्यतीति मूर्द्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच ।।८।।**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य अष्टमः खण्डः ।।८।।**

स्थानं ज्ञातुमिच्छामीति दाल्भ्येन कथितः शिलकः विद्धि इति होवाच-यथेच्छं जानीयाः । ततो दाल्भ्यः पृच्छति अमुष्य लोकस्य का गतिरिति । ततः शिलकः प्राह–अयं लोक इति । यागदानादिक्रमेण भूर्लोकस्य स्वर्गजनकत्वादित्यर्थः । अस्य लोकस्य का गतिरिति प्रश्ने शिलक उत्तरयति (न प्रतिष्ठामित्यादि) प्रतिष्ठातिरिक्तं न किमपि विश्रान्तिस्थानम् कोऽपि वदति अतोऽहमपि प्रतिष्ठामेव सामाधारं ब्रवीमीति ॥ ७ ॥

तं ह प्रवाहण इत्यादि पूर्ववदेव व्याख्यानं कर्तव्यमिति ।।८ ।।

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
अष्टमः खण्डः ।।८।।

---

## अथ प्रथमाध्याये नवमः खण्डः

**अस्य लोकस्य का गतिरित्याकाश इति होवाच सर्व्वाणि ह वा**

उक्तप्रकारेण राज्ञाऽनुमतः शिलको राजानं पृच्छति अस्य लोकस्य का गतिरिति । आकाश इति होवाच राजा । तत्राकाशते प्रकाशते इति आकाशः परमात्मा न तु भूताकाशः । तत्र युक्तिं दर्शयति (सर्वाणीत्यादि) सर्वाणीमानि स्थावरजंगमभूतानि आकाशपदवाच्यपरमात्मसकाशादुत्प-

इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्त्याकाश ह्येवैभ्यो ज्यायानाकाशः परायणम् ॥१॥

स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतमेवं विद्वान् परोवरीयां-समुद्गीथमपास्ते ॥२॥

तं हैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावन्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिंल्लोके जीवनं भविष्यति ॥३॥

द्यन्ते । उत्पत्तिविपरीतक्रमेण प्रलयसमये तत्रैव लयमपि यान्तीति । एभ्यः सर्वेभ्यः आकाशः ज्यायान् महान् परायणं त्रिष्वपि कालेषु सर्वेषां प्रतिष्ठेति भावः ॥१॥

( एष इत्यादि ) वरः उत्कृष्टः वरीयान् उत्कृष्टतरः वरीयसामपि वर इत्यर्थः । आकाश उद्गीथः परमात्मदृष्टिविशिष्ट उद्गीथ इत्यर्थः । उद्गीथे एतादृशाकाशदृष्टिः सम्पादनीयेति भावः । स एषोऽनन्तः उद्गीथे अध्यस्यमानोऽयमाकाशोऽनन्तः परिच्छेदत्रयवर्जितः सर्वव्यापीत्यर्थः । एवञ्चा-नन्तस्याकाशपदबोध्यस्य परमात्मन एव सामगतिपरंपराविश्रामस्थानत्वात् अन्तवत्वादिदोषो न भवतीत्यर्थः । ( परोवरीयोहास्येत्यादि ) यः खलु परोवरीयांसमेनमाकाशपदबोध्यं परमात्मानं विद्वान् आकाशरूपेणोद्गीथो-पासनं सम्पादयति तस्य परोवरीयस्त्वगुणविशिष्टं जीवनं भवति । तथा परोवरीयस्त्वगुणविशिष्टसकललोकप्राप्तिरपि भवतीति भावः ॥ २ ॥

प्रवाहणो राजा स्वोक्तमर्थं संवादयति । ( तमुवाचेति ) अतिधन्वा शुनकपुत्रः उदरशाण्डिल्याय ऋषये तत्रोदरशब्देनापत्यं लक्ष्यते तेनापत्य-शाली शाण्डिल्य इत्यर्थः तस्मै । एनमुद्गीथस्वरूपं वर्णयित्वा तदन्यदप्युक्तवान् ।

Scanned by CamScanner

**तथामुष्मिंल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यास्मिंल्लोके जीवनं भवति तथामुष्मिंल्लोके लोक इति लोके लोक इति ।।४।।**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य नवमः खण्डः ।।९।।**

किमुक्तत्वात् तत्राह (यावन्त इत्यादि) का कथा तव । त्वदीयवंशे अन्योऽपि कोऽपि य एनमुद्गीथमुपासिष्यते तस्योत्कृष्टं जीवनमिह लोके भविष्यतीत्यर्थः ।। ३ ।।

( तथेत्यादि ) तथा परलोकेऽपि उत्कृष्टजीवनं भविष्यतीति । लोके लोक इत्यत्र द्विरुक्तिर्विद्यासमाप्त्यर्थेति ।। ४ ।।

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
नवमः खण्डः ।।९ ।।

---

## अथ प्रथमाध्याये दशमः खण्डः

**मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ।।१।।**

प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनानि दर्शयितुं सुखावबोधार्थमाख्यायिकामुखेन प्राह- (मटचीत्यादि) चाक्रायण उषस्तिः चक्रस्यापत्यं नामत उषस्ति ऋषिः मटचीहमेषुकुरुषु=प्रशमानावृष्ट्यादिप्रयुक्तदुर्भिक्षदूषितेषु कुरुसंघेषु । तत्र मटचिः दुर्भिक्षमशनिर्वा । आटिक्या अटनमर्हतीति आटिकी तया अनुपजातस्त्रीव्यञ्जनया जायया पत्न्या सह । इभ्यग्रामेः तत्र इभो हस्ती तमर्हतीति इभ्यः ईश्वरो गजारोहो वा तेषां ग्रामे अनशनेन प्रद्राणकः कुत्सितां गतिमापन्नः ब्रह्मविद्याया मित्रत्यर्थं प्राणानामनवसादमिच्छन् उवास कस्यचित् गृहमाश्रित्योषितवानिति ।। १ ।।

**स हेभ्यं कुल्माषान् खादन्तं बिभिक्षे तं होवाच। नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति ॥२॥**

**एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादिति होवाच ॥३॥**

**न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमा न खादन्निति होवाच कामो म उदपानमिति ॥४॥**

स अन्नार्थी उषस्तिरटन्कुल्माषान् कुत्सितभाषान् खादन्तं कमपि इभ्यं विभिक्षेयाचितवान् । ते होवाचेति इतो मया भक्ष्यमाणादुच्छिष्टराशेः अन्ये कुल्माषा न मत्समीपे विद्यन्ते। यत् यस्मात् कारणात् इमे कुल्माषा मे चये कुत्सितभाषा मया भक्ष्यमाणे चये उच्छिष्ठराशौ उपनिहिताः प्रक्षिप्ता एव वर्तन्ते। अतः कथमुच्छिष्टं भवते दास्यामीत्युषस्तिमिभ्य उवाचेति ॥२॥

( एतेषामित्यादि ) यद्यपि उच्छिष्टा इमे माषास्तथापि मह्यं किञ्चिद्देहीति इभ्यमुषस्तिर्याचितवानित्यर्थः । तानस्मै प्रददौ=तान् स्वेन-भुज्यमानान् कुल्माषान् ऋषये इभ्यः प्रदत्तवानिति । ( हन्तेत्यादि ) ततः स्वसमीपवर्त्तिजलमादायात्यादारात् स्वीक्रियतां जलमिति इभ्येनोक्तो-ऋषिः तादृशजलपानकरणे उच्छिष्टभोजनजनितदोषो मे स्यादिति उषस्तिरुक्तवान् ॥ ३ ॥

(न स्विदेते इत्यादि) किमिदानीमेव मत्तो गृहीतास्त्वया माषास्ते मनुच्छिष्टाः ? एवमिभ्येन कथितो ऋषिः । भोः कुल्माषभक्षणे मे जीवनहानिः स्यादतस्तावन्मात्रभक्षणेन न तादृशो दोषः उदकं यथेच्छमन्यत्रापि प्राप्यते अतस्तद्ग्रहणे दोषः स्यादेवातो नो ग्रहिष्यामीति ॥४॥

(स ह स्वादित्येत्यादि) स ऋषिः स्वयं किंचिद्भक्षयित्वा अतिशिष्टान्

स ह खादित्वाऽतिशेषान् जायाया आजहार साग्र एव सुभिक्षा बभूव तान् प्रतिगृह्य निदधौ ॥५॥

स ह प्रातः सञ्जिहान उवाच यद्बताऽन्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ॥६॥

तं जायोवाच हन्त पत इम एव कुल्माषा इति तान् खादित्वाऽमुं यज्ञं विततमेयाय ॥७॥

तत्रोद्गातॄनास्तावे स्तोष्यमाणानुपोपविवेश स ह प्रस्तोतारमुवाच ॥८॥

अवशिष्टान् कुल्माषान् जायायै दत्तवानिति (सा अग्रे इत्यादि) सा ऋषिजाया अग्रे पत्या अन्नदानात् प्रागेव कुतश्चित् सुभिक्षालब्धान्ना बभूव । तथापि पतिदत्तमन्नं स्थापितवती ॥५ ॥

(स ह प्रातरित्यादि) ततः स उषस्तिः प्रातःकाले संजिहानः शयनं परित्यजन्नेव पत्नीं श्रावयित्वेदमुवाच । किमुक्तवान् तत्राह (यदित्यादि) यदि अन्नमल्पमपि लभेमहि तदा तेन प्राणरक्षां कृत्वा धनमात्रामल्पंधनं प्राप्स्यामीति । केन प्रकारेण प्राप्स्यामि तत्राह (राजासौ इत्यादि) असौ राजा समीपे एव यज्ञं करोति स मां दृष्ट्वायज्ञकरणायावश्यमेव प्रार्थयिष्यतीत्युक्तवान् ॥६॥

(तं जायोवाचेत्यादि) हे पते मम हस्ते समर्पिता माषा विद्यन्ते तान् गृहाणेत्युवाच पत्नी । तत उषस्तिस्तान् माषान् भक्षयित्वा विततं विस्तीर्णं राज्ञो यज्ञं गतवानिति ॥७॥

(तत्रेत्यादि) तत्र यज्ञे आस्तावे आस्तुवत्यस्मिन्निति आस्तावः स्तोत्रस्थानम् सदसि स्तुतिं कर्तुं प्रवृत्तानाम् उद्गातृप्रस्तोतृप्रहर्तॄणां उप समीपे उपविवेशोपविष्टवानित्यर्थः । (सह प्रतस्तोतारमित्यादि) स उषस्तिः

**प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति ॥९॥**

**एवमेवोद्गातारमुवाचोद्गातर्या देवतोद्गीथमन्वायत्ता ताञ्चेद-विद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति ॥१०॥**

**एवमेव प्रतिहर्त्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति ते ह समार-तास्तूष्णीमासाञ्चक्रिरे ॥११॥**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य दशमः खण्डः ।१०।**

प्रस्तोतारं वक्ष्यमाणमुवाचोक्तवानित्यर्थं । किमुक्तवान् तत्राह ॥८॥

(प्रस्तोतरित्यादि) हे प्रस्तोतः ! प्रस्तावमन्वायत्ता । प्रस्तावम-धिकृत्य या देवता उपास्यतया समुपदिष्टा तां देवतां यदि मम देवतास्वरूप-विज्ञानवतः समीपे अवित्वा प्रस्तोष्यसि स्तुतिं करिष्यसि तदा ते मूर्धाः शिरः पतिष्यति । यद्यपि "तेनोभौकुरुत" इत्यादिश्रुत्या अविदुषोऽपि स्तुतिकरणमनुज्ञातं तथापि विद्वत्समीपे अविदुषो मूर्धपातः स्पादेवेति भावः ॥९॥

(एवमेव वोद्गातारमित्यादि) पूर्ववदेवार्थो ज्ञातव्यः ॥१०॥

(एवमेप्रतिहर्तारमित्यादि) पूर्ववदेवार्थः (ते हेत्यादि) ते ह प्रस्तोतृ-प्रभृतयः उषस्तिवचनं श्रुत्वा देवतास्वरूपाविद्वांसः मूर्धापातभयात् । समारता उपरताः स्तुत्यादिकर्म परित्यज्य स्तूष्णीमेव आसोचक्रिरे स्थिताः कर्मविरता अभवन्नित्यर्थः ॥११॥

**इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य**

**दशमः खण्डः ॥१०॥**

## अथ प्रथमाध्याये एकादशः खण्डः

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥१॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्य्यैशिषं भगवतो वा अहमवित्त्यान्यानवृषि ॥२॥

भगवांस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेत्यथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥३॥

अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता

(अथ हैनमित्यादि) आगमनानकन्तरं राजोवाच हे भगवन्! को भवान् विद्यते इति ज्ञातुमहमिच्छामीति समुदितार्थः । अहमुषस्तिरस्मीति ऋषिरुवाच ॥१॥

स ह राजोवाच हे विद्वन् भवन्तं सर्वगुणसम्पन्नं ब्राह्मणमुखाच्छ्रुत्वा सर्वाणि आर्त्विज्यानि भवद्धीनं कर्तुं पर्यैषिसम्भवत एवान्वेषणमहमकरोम् प[रन्तु] भवतोऽविद्या अलामेक इमान् ब्राह्मणान् अवृषि वृतवानस्मि ॥२॥

(भगवांस्तु) अतः परमपि भगवानेव सर्वैरत्विज्यैः ऋत्विक्कर्मभिः परिवृत इति प्रोक्तवान् (तथेति) अथैते ब्राह्मणा मया समतिसृष्टाः समनुज्ञाता देवतायाः स्तुतिं कुर्वन्तु किन्तु एभ्योयावत् धनं दास्यति तावदेव धनंमह्यमपि देयं न ततो हीनमधिकं वा ततोहं ऋत्विक्कर्मकरिष्यामि इत्युक्ते ऋषौ तथाति यजमानः प्रोवाचेति पिण्डितोर्थः ॥३॥

(अथ हैनं प्रस्तोतोपससाद) उषस्तेर्वचनं श्रुत्वा प्रीतः प्रस्तोता सविनयं ऋषिसमीपं गतवानित्यर्थः (प्रस्तोतर्येत्यादि) हे भगवन्! मां प्रति

Scanned by CamScanner

**ताञ्चेदविद्वान्प्रस्तोष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥४॥**

**प्राण इति होवाच सर्व्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान्प्रास्तोष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥५॥**

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता ताञ्चेदविद्वानुद्गास्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥६॥**

**आदित्य इति होवाच सर्व्वाणि ह वा इमानि भूतान्यादित्य-**

प्रस्तोतर्या देवतामित्यादिना यां देवतामवोचत् कथितवान् सा देवता केति प्रस्तोता उषस्तिं पृष्टवान् ॥४॥

(प्राण इति होवाचेत्यादि) हे प्रस्तोतः प्रस्तावमन्वायत्ता प्राण एव सेति ऋषिरुक्तवान् । अत्र खलु प्राणपदेन परमात्मा कथ्यते । अत एव प्राणपदस्य मुख्यप्राणपरत्वं वारयति (सर्वाणीत्यादि) अभिसंविशन्ति लीयन्ते इत्यर्थः प्राणादेव समुत्पद्यन्ते । सैषा देवता सर्वभूतलयोत्पत्तिस्थानतया वेदान्तप्रसिद्धा प्राणलक्षणा देवता प्रस्तावमन्वायत्ता । प्रस्तावभक्तौ अध्यस्य उपासनीया । (तां चेदविद्वानित्यादि) मत्कथनानन्तरमपि यदि तामविद्वानेव प्रस्तोष्यसि तदा ते मूर्धा विपतिष्यति । अतः सम्यक्कृतं भवता । यद्विनयपूर्वकं तत्स्वरूपमपृच्छ इति ॥५॥

(अथ हैनमुद्गानेत्यादि) पूर्ववदेवार्थः ॥६॥

आदित्यः उद्गीथे अध्यस्योपास्य आदित्य इत्यर्थः । (उच्चैः सन्तमित्यादि) उच्चैर्विद्यमानमधःस्थितानि सर्वाणि भूतानि गायन्तीति

**मुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता ताञ्चेदविद्वानुद-गास्यो मूर्द्धा ते व्यपिष्यत्तथोक्तस्य मयेति ॥७॥**

**अथ हैनं प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवान-वोचत्कतमा सा देवतेति ॥८॥**

**अन्नमिति होवाच सर्व्वाणि ह वा इमानि भूतान्यन्नमेव प्रति-हरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति ॥९॥**

**इति छान्दोग्योपनिषदः प्रथमाध्यायस्य एकादशः खण्डः ॥११॥**

अन्यत्सर्वं पूर्ववदेव ॥७॥

(अथ हैनमित्यादि) पूर्ववदेवार्थः (अन्नमिति) अन्नमध्यस्योपास्य-मित्यर्थः । प्रतिहरमाणानि भक्षयन्तीत्यर्थः । अत्यत्सर्वं पूर्ववत् ॥८–९॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
एकादशः खण्डः ।

સમરીતિર્મહાતેજા: પરબ્રહ્મ સનાતન: |
જયતાજ્ઞાનકીનાથો વેદવ્યાસો મહામતિ:||

## अथ प्रथमाध्याये द्वादशः खण्डः

**अथातः शौव उद्गीथस्तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥१॥**

**तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायाम वा इति ॥२॥**

**तान् होवाचेहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयाञ्चकार ॥३॥**

**ते ह यथेवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येव-**

इतोऽव्यवहितपूर्वखण्डे अन्नाप्राप्तिनिमित्ता उच्छिष्ट-पर्युषितभक्षण-रूपा कष्टावस्था कथिता। इतः परमन्नलाभाय श्वदृष्ट उद्गीथ उद्गानं प्रस्तूयते (अथात इत्यादि) अथातः शौव उद्गीथः शौवः श्वदृष्ट उद्गीथः (तद्धेत्यादि) बको दाल्भ्यः ग्लावो मैत्रेयः स्वाध्यायं कर्तुमुद्वव्राज ग्रामाद्बहिर्निर्गतवानिति ॥१॥

(तस्मै श्वेत्यादि) तस्य स्वाध्यायकरणेन सन्तुष्टा देवता ऋषिर्वा श्वेतशुनकरूपतया तदग्रे प्रादुर्बभूव। तं श्वेतं श्वान तदन्येऽनेके श्वानः उपसमेत्योचुरुक्तवन्तः वयं बुभुक्षिताः स्मः मदर्थं गानेन भगवान् अन्नं सम्पादयतु इति ते प्रोक्तवन्तः ॥२॥

तान् क्षुल्लकान् शुनः प्रति स श्वेतः श्वा प्रोवाच। इहैवास्मिन् एव प्रदेशे प्रातःकाले भवन्तः उपसमीयाते उपगच्छता (तद्धेत्यादि) ततो बक-दाल्भ्यनामको ऋषिस्तत्संवादं श्रुत्वा श्वेतशुनामागमनं प्रतीक्ष्य स्थित-वानिति ॥३॥

ते श्वेतश्वादयः तत्रैव प्रातःकाले समागत्य बहिष्पवमानेन स्तो[illegible]-

**मा ससृपुस्तेह समुपविश्य हिङ्चक्रुः ॥४॥**

**ओ३मदा३मों३पिबा ३मों३देवो वरुणः प्रजापतिः सविता२न्न-मिहा२ऽहरदन्नपते२ऽन्नमिहाहराऽऽहरो ३ मिति ॥५॥**

**इति छान्दोग्योपनिषद प्रथमाध्यायस्य द्वादशः खण्डः ॥१२॥**

स्तोष्यमाणाः स्तुतिं कुर्वाणा उद्गातृपुरुषा संरब्धाः संलग्नाः अन्योन्य-संस्पृष्टा यथा तथैव ते अन्योन्यस्य पुच्छं मुखेन संगृह्य आससृपुः उपसर्पणं परिभ्रमणं कृतवन्तः ततस्ते एवं संसृप्य समुपविश्य हिंचक्रुः हिंकारं कृतवन्त इति ॥४॥

हिंकारस्वरूपमेव दर्शयति (ओमित्यादि) आमन्नं वयमदामः भक्षयामः ओं जलं पिवामः द्योतमानत्वात् देवो वरुणः वर्षणात् जगतः पालनात् प्रजा-पतिः सविता सर्वप्रसवितृत्वात् आदित्यः अन्नमाहरत् । हे अन्नपते सवितः मदर्थमन्नमाहरतु भवान् अन्नमाहर अन्नमाहरेति ॥५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
द्वादशः खण्डः ॥१२॥

---

## अथ प्रथमाध्याये त्रयोदशः खण्डः

**अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकार आत्मेहकारोऽग्निरीकारः ॥१॥**

सम्प्रति सामावयवान्तर्गतस्तोमाक्षरविषयाणि उपासनान्तराणि प्रदर्श्यन्ते (अयमित्यादि) हा उ इत्याकारको यः सामसु स्तोमः स अयं लोक

आदित्य ऊकारो निहव एकारो विश्वेदेवा ओहोइकारः प्रजापतिर्हिङ्कारः प्राणः स्वरोऽन्नं या वाग्विराट् ॥२॥

अनिरुक्तस्त्रयोदशस्तोभः सञ्चरो हुंकारः ॥३॥

दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एत मेवं साम्नामुपनिषदं वेदोपनिषदं वेद इति ॥४॥

इति छान्दोग्योपनिषदः प्रथमाध्याये त्रयोदशः खण्डः।

इति छान्दोग्योपनिषदः प्रथमाध्यायः समाप्तः ॥१॥

एतल्लोकत्वेनोपास्यः। स च स्तोमः रथन्तरे साम्नि प्रसिद्धः। वायुर्हा इकारः अय च स्तोभो वामदेवो साम्नि प्रसिद्धः चन्द्रमा अथकारः चन्द्रदृष्ट्या अथकारमुपासीतेत्यर्थः। आत्मा इहकारः इहेति स्तोभः प्रत्यक्षो ह्यात्मा। अग्निरीकारः ॥१॥

उकारश्चायं स्तोम आदित्यः, निहव एकारः निहव आह्वानमेकारः स्तोभः विश्वेदेवाः ओहोयिकारः वैश्वदेव्ये साम्नि अस्य स्तोभस्य दर्शनात् प्रजापतिर्हिंकारः प्राणः स्वर इति स्तोमः या या इति स्तोमः अन्नम्। अन्नेन हींद याति अतः तत्सामान्यात् वागिति स्तोमो विराडन्नम्। देवताविशेषो वा वैराजे साम्नि स्तोमदर्शनात् ॥२॥

( अनिरुक्त इत्यादि ) हा उकारादिभ्यो द्वादशभ्यः पूर्वोक्तस्तोमेभ्योऽधिकः हुमितिः यः त्रयोदशस्तोमः स अनिरुक्तः इदमिति निर्वक्तुमशक्यत्वात् सञ्चरः सन्देहरूपः तस्मात्कारणात् तत्र हुमितिस्तोमे सञ्चरत्व दृष्टिः कर्तव्येति। एवं हा उकारादि त्रयोदशस्तोमेषु पूर्वोक्तपृथिवीलोकादिदृष्टिः करणीयेति ॥३॥

स्तोमाक्षराणामुपासनाफलं प्रदर्शयति (दुग्धे इत्यादि) अविरोहितार्थ-

Scanned by CamScanner

मिदम् (य एतामित्यादि) यः एताम् सामावयवस्तोभाक्षराणामुपासनं वेद जानाति स यथोक्तफलभाग् भवति । द्विरुक्तिरध्यायपरिसमाप्त्यर्था ।। ४।।

इति छान्दोग्योपनिषद आनन्दभाष्ये प्रथमाध्यायस्य
त्रयोदशः खण्डः ।१३।

इति श्रीमद्भगवद्रामनन्दाचार्यकृतानन्दभाष्यभूषितायाः
छान्दोग्योपनिषदः प्रथमाध्यायः समाप्तः ।।४।।

---

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ॥

Nagpal

Scanned by CamScanner

॥ श्रियः श्रियै नमः ॥

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः

# छान्दोग्योपनिषदः

## द्वितीयाध्याये प्रथमः खण्डः ।

**ॐ समस्तस्य खलु साम्न उपासनं साधु यत्खलु साधु तत्सा-मेत्याचक्षते यदसाधु तदसामेति ॥१॥**

**तदुताप्याहुः साम्नैनमुपागादिति साधुनैनपागादित्येव तदाहुर-सामैनमुपागादित्यसाधुनैनमुपागादित्येव तदाहुः ॥२॥**

**अथोताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव**

इतः पूर्वं सामावयवस्योपासनं प्रदर्श्य संप्रति सम्पूर्णस्य साम्न उपासनं प्रदर्श्यते (समस्तस्येत्यादि) समस्तस्य सर्वावयवसंयुतस्य पांच-भक्तिकस्य साप्तभक्तिकस्य च साम्न उपासनं साधु—अत्र साधु शब्दः शोभनार्थकः यतः खलु लोकेऽपि दृश्यते यत् साधु शोभनं तत् साम इत्याचक्षते लोकाः यत् खलु अशोभनं तत् असामेत्याचक्षते लोका इति साध्वसाधु कर्मणी सामासामत्वेन व्यवहरन्तीत्यर्थः ॥१॥

(तदुतेत्यादि) तत् तस्मिन् सामविषये अन्यदपि आहुः कथयन्ति । किं तत् कथयन्ति तत्राह (साम्नैनमित्यादि) सामासामोपायाभ्यामागतं प्रत्यर्थिनं साध्वसाधुभ्यामागतमित्येवं व्यवहरन्ति लोका इत्यर्थः ॥२॥

( अथोताप्याहुरित्यादि ) अथास्मिन्नेव विषये अन्यदप्याहुर्लोकाः

**तदाहुरसाम नो बतेति यदसाधु भवत्यसाधु बतेत्येव तदाहुः ।।३।।**

**स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशो ह यदेनं साधवो धर्म्मा आ च गच्छेयुरुप च नमेयुः ।।४।।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य प्रथमः खण्डः ।।१।।**

(साधुबतेतीत्यादि) यत्कार्यं साधु भवति तदस्माकं सामबतेत्यनुमोदनपूर्वकं लोका व्यवहरन्ति । साम नोबत इत्युक्ते एव विषये साधुबतेति लोको वदति । ततः साम-साधु शब्दौ एकत्र प्रयुज्यमानौ दृश्येते । एवमसाधु असाम शब्दावपि एकार्थकौ । ततः सामसाधुशब्दयोरेकस्मिन् विषयेप्रयोगदर्शनात् समस्तस्य साम्नः साधुत्वेनोपासनं कर्तव्यमित्यर्थः ।।३।।

(स य इत्यादि) स यो विद्वान् उपासकः एवं साधुत्वेन समस्तस्यापि साम्न उपासनं करोति एनं तमुपासकम् अभ्याशो झटिति साधवो धर्माः सर्वेऽपि आगच्छेयुः भोग्यत्वेन प्राप्ता भवन्तीति । उप च नमेयुः भोग्यतां प्राप्नुयुरिति ।।४।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
प्रथमः खण्डः ।।१।।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ ।
જયતાડ્જ્ઞાનકીનાથો વેદવેદ્યો મહામતિઃ ॥

Puneet Nagpal

## अथ द्वितीयाध्याये द्वितीयः खण्डः

लोकेषु पञ्चविधं सामोपासीत पृथिवी हिङ्कारोऽग्निः प्रस्तावोऽन्तरिक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधन-मित्यूर्ध्वेषु ॥१॥

अथावृत्तेषु द्यौर्हिङ्कार आदित्यः प्रस्तावोऽन्तरिक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥२॥

कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पञ्चविधं सामोपास्ते ॥३॥

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य द्वितीयः खण्डः ॥२॥

लोकेषु पृथिव्यादिलोकेषु पंचविधं पंचभक्तिभेदेन पंचप्रकारकं साधु-समस्तमपि सामोपासीत । तदुपासनं कुर्यात् तत्प्रकारमेव दर्शयति (पृथिवीत्यादि) अत्र हिंकारप्रस्तावोद्गीथप्रतिहारनिधनक्रमेण पृथिव्यन्तरि-क्षादित्यद्युलोकदृष्टिरूर्ध्वक्रमेण कार्येत्यर्थः ॥१॥

(अथावृत्तेषु इत्यादि) तत्रावृत्तेषु अवाङ्मुखेषु विपरीतक्रमेणेत्यर्थः । द्युलोकादित्यान्तरिक्षाग्निपृथिवीदृष्टिः कार्येति । एतादृशोपासनस्य फलमाह (कल्पन्ते इत्यादि) अतिरोहितार्थमिदं प्रकरणम् ॥२–३॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य

द्वितीयः खण्डः ॥२॥

Scanned by CamScanner

## अथ द्वितीयाध्याये तृतीयः खण्डः

**वृष्टौ पञ्चविधं सामोपासीत पुरो वातो हिङ्कारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥१॥**

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधं सामोपास्ते ॥२॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य तृतीयः खण्डः ॥३॥**

(वृष्टावित्यादि) पूर्ववदेवात्रापि पञ्चप्रकारके साम्नि वृष्टिदृष्टिः कार्येत्यर्थः । पुरो वात इत्यादि स्पष्टम् ॥१॥

उपासनाफलमाह ( वर्षति हास्मै इत्यादि ) एतादृशोपासनाकर्तु-रिच्छायां सत्यां वर्षणसमयेऽपि भवतीत्यर्थ । (वर्षयतीत्यादि) य एतादृशो-पासनं करोति स स्वेच्छया यजमानाय वर्षां कारयतीत्यर्थ ॥२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
तृतीयः खण्डः ॥३॥

---

## अथ द्वितीयाध्याये चतुर्थः खण्डः

**सर्व्वास्वप्सु पञ्चविधं सामोपासीत मेघो यत् सम्प्लवते स हिङ्कारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम् ॥१॥**

(सर्वास्वित्यादि) पूर्ववदेवार्थः कर्तव्यः। संप्लवने तत्र संप्लवनं सञ्चारः याः प्राच्यः स्यन्दन्ते आपः प्रतीच्यः स्यन्दन्ते आपः स प्रतिहारः । अन्यत्सर्वं पूर्ववत् ॥१॥

**न हाप्सु प्रैत्यप्सुमान् भवति य एतदेवं विद्वान् सर्व्वास्वप्सु पञ्चविधं सामोपास्ते ।।२।।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य चतुर्थः खण्डः ।।४।।**

(न हाप्सु इत्यादि) न प्रैतिनज्जले म्रियते इत्यर्थः । अप्सुमान भवति । पुष्कलजलसम्पत्त्या सम्पन्नो भवति । अन्यत्सर्वं पूर्ववदेव ज्ञातव्यमिति ।।२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
चतुर्थः खण्डः ।।४।।

---

## अथ द्वितीयाध्याये पञ्चमः खण्डः

**ऋतुषु पञ्चविधं सामोपासीत वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनम् ।।१।।**

**कल्पन्ते हास्मा ऋतव ऋतुमान्भवति य एतदेवं विद्वानृतुषु पञ्चविधं सामोपास्ते ।।२।।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य पञ्चमः खण्डः ।।५।।**

(ऋतुषु इत्यादि) अतिरोहितार्थं प्रकरणम् । उपासनाफलमाह ।।१।।

(कल्पन्ते इत्यादि) कल्पन्ते उपासकस्यैते ऋतवो भोग्यवस्तुसम्पादने समर्थाः भवन्तीति । ऋतुमान् भवति उपासको वसन्तादिकऋतुफल-भोगशाली भवतीत्यर्थः ।।२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
पञ्चमः खण्डः ।।२।।

## अथ द्वितीयाध्याये षष्ठः खण्डः

**पशुषु पञ्चविधं सामोपासीताजा हिङ्कारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ।।१।।**

**भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधं सामोपास्ते ।।२।।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य षष्ठः खण्डः ।।६।।**

(पशुषु इत्यादि) अवयो मेषाः । अन्यत्सर्वं स्पष्टम् । उपासकस्य फलमाह । (भवन्तीत्यादि) अस्योपासकस्याजाद्याः पशवः भोगसम्पाददक्षा भवन्तीत्यर्थः ।।१।।

(पशुमान् भवतीत्यादि) अयमुपासको यथोक्तोपासनया प्रभूत-पशुमान्भवतीत्यर्थः । अन्यत्सर्वं स्पष्टम् ।।२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
षष्ठः खण्डः ।।६।।

---

## अथ द्वितीयाध्याये सप्तमः खण्डः

**प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिङ्कारो**

(प्राणेषु इत्यादि) प्राणेषु पञ्चविपरोवरीयः सामोपासीत । तत्र वरीयस्त्वं ज्येष्ठत्वं परत्वञ्च श्रेष्ठत्वम् । परत्वे सति वरीयस्त्वं परो-वरीयस्त्वम् । तथात्र परोवरीयस्त्वगुणकप्राणदृष्टचा पञ्चप्रकारक सामोपासनं करणीयमित्यर्थः । अत्र प्राणपदेन मुख्यप्राणो गृह्यते तदापन्नाय-त्तस्थितिप्रवृत्तिकत्वादन्येषामपि प्राणत्वम् । "तद्वा एतद् मिथुनं वाक् च

**वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयांसि वैतानि ॥१॥**

**परोवरीयो हास्य भवति परोवरीयसो ह लोकाञ्जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥२॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य सप्तमः खण्डः ॥७॥**

प्राणश्च" इति श्रुतौ वाक् प्राणो संयुक्तौ गृहीतौ अतः प्राणपदं न घ्राणस्य बोधकमपि तु मुख्यस्यैव ज्ञापकम् । प्राणो हिंकारः वाक्प्रस्तावः तत्र-प्राणबल प्राप्ते रनन्तरं वाचो व्यवहारो भवति । तत्रापि बोधकव्यवहारसाक्षात् निष्पादनात् प्राणादनन्तरं वाचः कथनम् । वाग्व्यवहारस्य दृष्टार्थ-मूलकत्वात् वाचः प्रागर्थबुद्धिकरं ग्राहकताशक्तिसम्पन्नस्य चक्षुषः उद्गीथ-कथनम् । अदृष्टार्थेऽपि शब्दश्रवणेनार्थकरत्वदर्शनात् श्रोत्रं बुद्धिकरम् । मनोनिधनम् । यस्मात् मनस उपरि न किमपि बुद्धिकरमस्ति तस्मात्तन्मनो-निधनमिति । एतेषां मुख्यप्राणादीनां पंचानामेव सर्वत्र श्रेष्ठतयापरिगणनं कृतम् अत एवात्र परोवरीयस्त्वं प्राणानां कथितं परत्वे सति वरीयस्त्वम् । एतानि प्राणदीनि परोवरीयांसि । परोवरीस्त्वगुणविशिष्टानीति ॥१॥

उपासनाफलमाह (परोवरीय इत्यादि) उपासकस्य जीवनमतिश्रेष्ठं भवतीत्यर्थः इति । अनेन प्रकारेण पञ्चविधस्य पञ्चप्रकारकस्य साम्न उपासनं कथितम्भवतीति । अन्यत्सर्वं स्पष्टम् ॥२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
सप्तमः खण्डः ॥७॥

Scanned by CamScanner

## अथ द्वितीयाध्याये अष्टमः खण्डः

**अथ सप्तविधस्य वाचि सप्तविधं सामोपासीत यत्किञ्च वाचोहुं ३ इति स हिङ्कारो यत्प्रेति स प्रस्तावो यदेति स आदिः ॥१॥**

**यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनं ॥२॥**

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान्वाचि सप्तविधं सामोपास्ते ॥३॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य अष्टमः खण्डः ॥८॥**

अथ सप्तविधस्य सप्तप्रकारकस्य साम्न उपासनं प्रस्तूयते । (वाचि) वाग्दृष्टिविशिष्टं सप्तविधं सप्तप्रकारकं सामोपासीत यत्किञ्च वाचः यत्किञ्चिद्वाचः शब्दस्य हुमिति यो विशेषः स हिंकारो हकार-सामान्यात् । यत् प्रेति शब्दरूपं स प्रस्तावः प्रशब्दसामान्यात् (यदेति) यत् आ इति स आदिः आकाशशब्दसामान्यात् आदिरित्योंकारः सर्व-प्रथमत्वात् ॥१॥

(यदुदिति स उद्गीथः) उत्पूर्वत्वादुद्गीथस्य यत्प्रतीति स प्रतिहारः । प्रतिशब्दसामान्यात् । यदुदेति स उपद्रवः । उपोपक्रमत्वात् उपद्रवस्य यन्निति तन्निधनम् । निशब्दसामास्यदिति ॥२॥

उपासनाफलमाह (दुग्धे इत्यादि) अर्थस्तु पूर्ववदेव कर्तव्य इति ॥३॥

इति छांन्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य अष्टमः खण्डः ॥८।

## अथ द्वितीयाध्याये नवमः खण्डः

**अथ खल्वमुमादित्यं सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम ॥१॥**

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात्स हिङ्कारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिंकुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥२॥**

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्ता–**

अवयवमात्रे साम्नि आदिदृष्टिः पञ्चप्रकारके प्रथमाध्याये प्रदर्शिता । अथ तदनन्तरममुमादित्यं सम्पूर्णे साम्नि अवयवविभागपूर्वकमध्यासं कृत्वा सप्तप्रकारकमुपासनं प्रदर्श्यते (अथेत्यादि) सप्तप्रकारके साम्नि आदित्यदृष्टिः कर्तव्येत्यर्थः । तत्र सामादित्ययोरेकत्वाध्यासकारणं दर्शयति (सर्वदेत्यादि) वृद्धिक्षयाभावात् सर्वदा एकरूपत्वेन समः तेन साम इति कथ्यते आदित्यः । (मां प्रतीत्यादि) लोकेऽपि । अयमादित्यो मां प्रति अभिमुखो मां प्रति अभिमुख इति प्रतीयते सर्वः तस्मात् कारणात् आदित्यः साम इति ॥१॥

तस्मिन् आदित्ये इमानि सर्वाणि भूतानि अन्वायत्तानि अनुगतानि आदित्यमुपजीव्य जीवन्तीत्यर्थः इति विद्यात् । सर्वभूतोपजीव्यतया-आदित्यमुपासीतेत्यर्थः । कालभेदेन भूतानामुपजीवनप्रकारं दर्शयति तस्ये-त्यारभ्य साम्न इत्यन्तम् । तस्यादित्यस्य उदयात् पुरा पूर्वं यत् रूपं स हिंकारः हिंकारे तद्रूपदृष्टिः कार्येत्यर्थः । अस्यादित्यस्य यत् हिंकाराख्यं रूपं तत् रूपं पशवो गवादयः अन्वायत्ता उपजीवन्ति हि यस्मात् ते एतस्य साम्नः साम-रूपादित्यस्य सम्बन्धिहिंकारलक्षणरूपोपजीविनः तस्मात् कारणात् ते पशवः हिंकुर्वन्ति हिमित्याकारकं शब्दं कुर्वन्तीत्यर्थः ॥२॥

अथ प्रथमोदिते प्राथमिकोदयकाले यत् रूपं स प्रस्तावः प्रथमोदय-

स्तस्मात्ते प्रस्तुतिकामाः प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥३॥

अथ यत्सङ्गववेलायां स आदिस्तदस्य वयांस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्बणान्यादायात्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥४॥

अथ यत्सम्प्रति मध्यन्दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥५॥

अथ यदूर्ध्वं मध्यन्दिनात्प्रागपराह्णात्स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥६॥

कालावच्छिन्न आदित्यः प्रस्तावः अस्य तथाविधं रूपं मनुष्याः अन्वायत्ता उपजीवन्तीत्यर्थः । यस्मात्ते प्रस्तावाख्यप्रथमोदितादित्यरूपोपजीविनस्तस्मात्कारणात् ते प्रस्तुतिकामाः प्रशंसाकामाः भवन्ति । अन्यत्पूर्ववत् ॥३॥

(अथ यदित्यादि) संगववेलायाम् । गवां रश्मीनां संगमनं संगवः यस्यां वेलायां तस्मिन्काले यदादित्यं रूपं स आदितः तदस्य वयांसि-पक्षिणोऽन्वायत्तानि तस्मात्कारणात् अनारेवणानि अनावरणानि आत्मानमेवादाय परिपतन्ति आकाशे गमनागमनं कुर्वन्ति ॥४॥

(अथ यत् संप्रतीत्यादि) संप्रति मध्यन्दिने ऋजुमध्यन्दिने : प्राजापत्यानाम् प्रजापत्यपत्यानां देवासुराणां मध्ये ते सत्तमा अत्युत्तमा इत्यर्थः । अत्र उद्गीथसत्तमशब्दयोः संयुक्ततकारश्रुतिमत्वं समानमेवातः उपजीव्योपजीवकभाव इति ॥५॥

(अथ यदूर्ध्वमित्यादि) आदित्यस्य प्रतिहारभक्तिरूपोपजीव्यत्वादेव ऊर्ध्वं प्रतिहृताः सन्तः गर्भा नावपद्यन्ते द्वारे सत्यपि नाधः पतन्तीत्यर्थः ॥६॥

Scanned by CamScanner

**अथ यदूर्ध्वमपराह्णात्प्रागस्तमयात्स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ।।७।।**

**अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यं सप्तविधं सामोपास्ते ।।८।।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य नवमः खण्डः ।।९।।**

(अथ यदूर्ध्वमपराह्णादित्यादि) आदित्यसम्बन्ध्यु उपद्रवभक्त्युपजीवित्वादेव मनुष्यदर्शनभीतानां कक्षश्वभ्रादिषूपद्रवणमित्यर्थ ।।७।।

(अथ यदित्यादि) तस्मात्तान्निदधतिः श्राद्धकर्तारः पुत्रादयः दर्भेषु पितॄन् तदर्थपिण्डान् निक्षिपन्ति । निधनभाजिन इति निधनोपजीवित्वात् पितृणां दर्भेषु निधनं प्राप्तवन्तः । उपसंहरति एवमुपास्ते इति ।।८।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य

नवमः खण्डः ।।९।।

---

## अथ द्वितीयाध्याये दशमः खण्डः

**अथ खल्वात्मसम्मितमतिमृत्यु सप्तविधं सामोपासीत हिङ्कार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ।।१।।**

तत्र मृत्युरादित्यः स चाहोरात्रादिकालेन जगन्नाशकारणात् मृत्युत्वम् । अथ अध्यस्तादित्यमानसप्तप्रकारकसामोपासनोपदेशादनन्तरम् आत्मनो सर्वेषामेवमेव परस्परसंमितत्वकथनात् आत्मसंमितत्वम् । एतादृशमति-

**आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥२॥**

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम ॥३॥**

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविंशतिरक्षराणि ॥४॥**

**एकविंशत्यादित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविंशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥५॥**

**आप्नोतीहादित्यस्य जयं परो हास्यादित्यजयाज्जयो भवति य**

मृत्युः । सप्तप्रकारकं सामोपासनं कुर्यात् । आत्मसंमितत्वमतिमृत्युप्रकारं दर्शयति हिंकार इत्यादि सममित्यन्तम् । अनयोरुभयोरपि समत्वादेवावापो-द्वापौ न कर्तव्याविति ॥१॥

(आदिरितीत्यादि) ततश्चतुरक्षरात् एकमक्षरं गृहीत्वाद्यक्षरे निवेशिते सममेव भवतीत्यर्थः ॥२॥

(उद्गीथ इत्यादि) चतुरक्षरे उपद्रवे । एकाक्षरे पृथक्कृते अवशिष्टं त्र्यक्षरमुभयत्रापि तुल्यमेव भवतीति ॥३॥

अन्यत्सर्वं स्पष्टम् ॥४॥

(एकविंशत्येत्यादि) द्वादश मासाः पञ्च ऋतवः त्रय इमे लोकाः आदित्यश्चेति । एवं प्रकारेणादित्यस्यैकविंशत्वम् । ततः सप्तप्रकारकभक्तिनामाक्षरगतैकविंशतिसंख्यया एकविंशतिसंख्याकमादित्यं प्राप्नोति सवितुः सालोक्यं प्राप्नोतीति । (द्वाविंशेत्यादि) द्वाविंशेनाक्षरेण आदित्यात्परं दुःख-रहितं लोकमादित्यजयं च प्राप्नोतीत्यर्थः ॥५॥

(परो हेत्यादि) अस्मादादित्यजयात् सर्वोत्कर्षो भवतीत्यर्थः ।

Scanned by CamScanner

एतदेवं विद्वानात्मसम्मितम तिमृत्यु सप्तविधं सामोपास्ते सामोपास्ते ॥६॥

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य दशमः खण्डः ॥१०॥

अन्यत्सर्वं स्पष्टम् ॥६॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
दशमः खण्डः ॥१०॥

---

## अथ द्वितीयाध्याये एकादशः खण्डः

मनो हिङ्कारो वाक्प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥१॥

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः

(अतः परं गायत्ररथन्तरादि) सामोपासनं प्रदर्शयति मनोनिधनान्तम् । गायत्रनामकसाम्नः हिंकारप्रस्तावोद्गीथप्रतिहारनिधननामकपञ्चप्रकारक-भक्तिविषये मनोवाक्चक्षुःश्रोत्रप्राणबुद्धिः कार्येति समुदितार्थः । (एतदित्यादि) प्रोतमेत्यस्याश्रितमित्यर्थः । अनेन प्रकारेण गायत्रनामकसाम्नः मनः प्रभृति-प्राणानां चाध्यासाधिष्ठानभावलक्षणसम्बन्धेन परस्परसम्बद्धमिति ॥७॥

फलश्रुतिमुक्तोपासनस्य दर्शयति (स य इत्यादि) य उपासक एवमुक्तप्रकारेण वेद जानाति समुपास्ते स प्राणी भवति परिपूर्णेन्द्रियो भवतीत्यर्थः । ज्योक् उज्ज्वलः व्याध्यादिरहितजीवनो भवतीति । महामनाः (महानित्यादि) परिपूर्णकीर्तिः पश्वादियुक्तो भवतीत्यर्थः ।

स्यात्तद्व्रतम् ।।२।।

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य एकादशः खण्डः ।।११।।

बदान्यमनस्को भवतीत्यर्थः । तद्व्रतम् महामनस्कत्वमेतदुपासनाङ्गमित्यर्थः । एवं सर्वत्रापि । अवशिष्टं सुगमम् ।।२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
एकादशः खण्डः ।।११।।

---

## अथ द्वितीयाध्याये द्वादशः खण्डः

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनं संशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ।।१।।

स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ।।२।।

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य द्वादशः खण्डः ।।१२।।

(अभिमन्थति स हिंकारः) उपशाम्यति तत्रोपशमः सावशेषः शमः निःशेषोपशमः संशमः अग्नेरभिमुखो नाचामेत् न भक्षयेदन्नादिकम् न निष्ठीवेत् श्लेष्मादिपरित्यागं च न कुर्यादिति "नाप्सु मूत्रं पुरीषं वा ष्ठीवनं नैव कारयेत्" इति स्मृतेः जनपदमग्नेरुपलक्षकमिति ।।१-२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
द्वादशः खण्डः ।।१२।।

## अथ द्वितीयाध्याये त्रयोदशः खण्डः

उपमन्त्रयते स हिङ्कारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रति स्त्रीं सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् ।।१।।

स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनान्मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत्तद्व्रतम् ।।२।।

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य त्रयोदशः खण्डः ।।१३।।

(उपमन्त्रयते) संकेतं करोति स हिंकारः (ज्ञपयते) तोषयति स्त्रिया सह शेते। एकस्मिन्पर्यङ्कादौ समुपवेशनं सहशयनम् (प्रतिस्त्रीमिति) स्त्रिया सहाभिमुख्येन शयनम् (कालमिति) मैथुननिवृत्तिरित्यर्थः ।।१।।

फलं दर्शयति (स य इत्यादि) मिथुनीभवति : स्त्रिया सह सर्वदा अवियुक्तो भवतीति (मिथुनादिति) अमोघवीर्यो भवति। (न कांचनेति) प्रार्थयमानां कामपि न परिहरेत् परस्त्रीगमनप्रतिषेधशास्त्रं वामदेव्योपासनाव्यतिरिक्तपरकमिति न परस्परं विरोध इति ।।२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य त्रयोदशः खण्डः ।।१३।।

## अथ द्वितीयाध्याये चतुर्दशः खण्डः

उद्यन्हिङ्कार उदितः प्रस्तावो मध्यन्दिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तं यन्निधनमेतद्‍बृहदादित्ये प्रोतम् ॥१॥

स य एवमेतद्‍बृहदादित्ये प्रोतं वेद तेजस्व्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत्तद्‍व्रतम् ॥२॥

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य चतुर्दशः खण्डः ॥१४॥

(उद्यन्सूर्यो हिंकारः) उदित उदितकालावच्छिन्नः प्रस्तावः मध्यन्दिनो मध्यन्दिनकालावच्छिन्नः सविता उद्‍गीथः अस्तं यन्निधनं अस्तं गच्छन् निधनम् (तपन्तमित्यादि) तपन्तं सूर्यं न कथमपि निन्देत् तस्य निन्दां न कुर्यादिति ॥१–२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य चतुर्दशः खण्डः ॥१४॥

---

## अथ द्वितीयाध्याये पञ्चदशः खण्डः

अभ्राणि सम्प्लवन्ते स हिङ्कारो मेघो जायते स प्रस्तावो

(अभ्राणीत्यादि) तत्राभ्रं नाम जलधारकत्वमात्रावस्थापन्नं धूमादीनां संघातात्मकं सम्प्लवः संचरणम् । मेघो जायते । सेचकत्वावस्थामापन्नो मेघः स प्रस्तावः । उद्‍गृह्णाति । तत्रोद्‍ग्रहणं वर्षसमाप्तिः (एतद्वैरूपमिति) तत्र

**वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वै रूपं पर्जन्ये प्रोतम् ॥१॥**

**स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपांश्च सुरूपांश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥२॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य पंचदशः खण्डः ॥१५॥**

वैरूपं वैरूपाख्यं सामेत्यर्थः। उपासनाफलं दर्शयति ॥१॥

(स य इत्यादि) विरूपान् विरुद्धानेकरूपान् सुरूपान् शोभनरूपान् अवरुन्धे प्राप्नोतीति। (वर्षन्तम्) वर्षन्तं पर्जन्यं न निन्देत्। अन्यत् सर्वं पूर्ववत् ॥२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
पञ्चदशः खण्डः ॥१५॥

---

## अथ द्वितीयाध्याये षोडशः खण्डः

**वसन्तो हिङ्कारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनमेतद्वै राजमृतुषु प्रोतम् ॥१॥**

**स य एवमेतद्वै राजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान् कीर्त्यर्तूंन्न निन्देत्तद्व्रतम् ॥२॥**

Scanned by CamScanner

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य षोडशः खण्डः ।।१६।।

(एतदित्यादि) एतद्वैराजं वैराजाख्यं साम ऋतुषु प्रोतमाश्रितमन्यत्सर्वं पूर्ववत् ।।१-२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
षोडशः खण्डः ।।१६।।

---

## अथ द्वितीयाध्याये सप्तदश खण्डः

पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ।।१।।

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्न निन्देत्तद्व्रतम् ।।२।।

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य सप्तदशः खण्डः ।।१७।।

(पृथिवीत्यादि) शक्वर्यः तदाख्यं साम । शक्वरीशब्दो नित्यबहुवचनः फलश्रुतौ लोकीभवति इत्यस्य उत्तमलोकं प्राप्नोतीत्यर्थः । अन्यत्सुगमम् ।।१-२।।

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
सप्तदशः खण्डः ।।१७।।

---

Scanned by CamScanner

## अथ द्वितीयाध्याये अष्टादशः खण्डः

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥१॥

स य एतमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥२॥

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य अष्टादशः खण्डः ॥१८॥

अत्रापि रेवत्यस्तदाख्यं साम शक्वर्यः इतिवत् नित्यबहुवचनम् । सामविशेषनाम । अन्यत्सर्वं सुगमम् ॥१–२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
अष्टादशः खण्डः ॥१८॥

---

## अथ द्वितीयाध्याये एकोनविंशः खण्डः

लोम हिंकारस्त्वक् प्रस्तावो मांसमुद्गीथोऽस्थि प्रतिहारो मज्जा निधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥१॥

(लोम हिंकारः) देहावयवेषु मध्ये लोम्नः प्राथम्यात् । त्वक् प्रस्तावः आनन्तर्यात् मांसमुद्गीथः सर्वेषु श्रैष्ठ्यात् । अस्थि प्रतिहारः प्रतिहृतत्वात् मज्जा निधनम् अन्तेभवात् एतद् यज्ञायज्ञीयं नाम साम देहावयवेषु मध्ये प्रोतमाश्रितमित्यर्थः ॥१॥

**स य एवमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गी भवति नाङ्गेन विहूर्च्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात्तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥२॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य एकोनविंशः खण्डः ।१९।**

उपासनाफलमाह (स य इत्यादि) अंगीभवति समग्रांगो भवति । नांगेन विहूर्च्छति नांगविकलो भवति पंगुः कुणी वेत्यर्थः संवत्सरं वर्षमात्रं मज्ज्ञो मांसानि नाश्नीयात् न भक्षयेत् मज्ज्ञो नाश्नीयात् कदाचिदपि मांसभक्षणं न कुर्यात् तद्व्रतमिति ॥२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
एकोनविंशः खण्डः ॥१९॥

---

## अथ द्वितीयाध्याये एकविंश खण्डः

**अग्निर्हिङ्कारो वायुः आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥१॥**

**स य एतमेतद्राजनं देवतासु प्रोतं वेदेतासामेव देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति**

(अग्निर्हिंकार इत्यादि) पूर्ववत् (स य इत्यादि) सलोकतां समानलोकतां सार्ष्टितां समानऋद्धित्वम् । सायुज्यं सयुग्भावम् समानभोग्यत्वम् ब्राह्मणान् न निन्देत् । एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा इति श्रुतेः ब्राह्मणनिन्दा देवतानिन्दैवेत्यतो ब्राह्मणनिन्दा न कार्येति ॥१-२॥

Scanned by CamScanner

महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्न निन्देत्तद्-द्व्रतम् ॥२॥

इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य विंशः खण्डः ॥२०॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वियीयाध्यायस्य विंशः खण्डः ॥२०॥

---

## अथ द्वितीयाध्याये एकविंशः खण्डः

त्रयी विद्या हिङ्कारस्त्रय इमे लोकाः स प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयांसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन्प्रोतम् ॥१॥

स य एवमेतत्साम सर्वस्मिन् प्रोतं वेद सर्वं ह भवति ॥२॥

तदेष श्लोको यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥३॥

त्रयीत्यादिकं पूर्ववत् सर्वं ह भवतीति सर्वेश्वरो भवति सर्वं काम्यमानं प्राप्नोतीत्यर्थः । तदेष श्लोकः तत्कथिते सर्वात्मकसामोपासने एषो वक्ष्यमाणो मन्त्रोऽपि भवति तमेव दर्शयति (यानीत्यादि) त्रयीविद्या हिंकारः इत्यादिना कथितानि यानि त्रीणि त्रीणि तानि हिंकारादिभेदेन पञ्चधा पञ्च-प्रकाराणि भवन्ति । तेभ्यः परमन्यत् ज्यायः श्रेष्ठं परोत्कृष्टं किमपि नास्ति । य उपासकस्तद्वेद जानाति सर्वं स वेद । सर्वज्ञो भवतीत्यर्थः । अस्मै उपासकाय सर्वा दिशो बलिमुपायनं हरंति समर्पयन्ति । (सर्वमस्मीत्यादि)

**यस्तद्वेद स वेद सर्वं सर्वा दिशो बलिमस्मै हरंति सर्वमस्मीत्यु-पासीत तद्व्रत तद्व्रतम् ॥४॥**

**इति छान्दोग्योपनिषदो द्वितीयध्यायस्य एकविंश ॥ २१ ॥**

सामसामान्ये पूर्वोक्तप्रकारेण सर्वाश्रयत्वेन स्वाभेदतयोपासना विधेयेति । तदेव तस्य व्रतं नान्यद्व्रतमिति ॥३॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
एकविंशः खण्डः ॥२१॥

---

## अथ द्वितीयाध्याये द्वाविंशः खण्डः

**विनर्दिसाम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्रजापते-र्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वान्तं वरुणस्य तान्सर्वानेवोपसेवेत वारुणन्त्वेव वर्जयेत् ॥१॥**

पूर्वकथितप्रकारेण साम्न उपासनं परिसमाप्य गानविशेषात् उद्गा-नमुपदिशति (विनर्दीत्यादि) तत्र विलक्षणो नर्दो विनर्दः स्वरविशेषः ऋषभकूजितसमानः स स्वरविशेषो विद्यते अस्येति विनर्दिगानमित्यर्थः । साम्नः सामसम्बन्धिगानम् । वृणे प्रार्थये । पशव्यं पशुभ्यो हितम् । अग्ने-रुद्गीथोऽनिरुक्तः अग्निदैवत्यम् उद्गीथ उद्गानम् एवं विशिष्टमुद्गानं वृणे प्रार्थये इतिवाक्यशेषः । अनिरुक्तः अमुकतुल्य इत्यविशेषितः अग्नि-दैवत्यो गानविशेषः । प्रजापतेर्निरुक्तः तत्र निरुक्तः स्पष्टः स्पष्टो गानविशेषः प्रजापतिदैवत्यः प्रजापतिप्रीतिकारणमित्यर्थः । सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णम् स्पष्टमेतत् बलवदिन्द्रस्य बलवत्प्रयत्नयुक्तं गानमिन्द्रस्य । क्रौञ्च-

Scanned by CamScanner

अमृतत्त्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मन आगायानीत्येतानि मनसा ध्यायन्नप्रमत्तः स्तुवीत ॥२॥

सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥३॥

अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवं स त्वा प्रतिपेक्ष्यतीत्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं

बृहस्पतेः बृहस्पतिदेवतायाः क्रौञ्चपक्षिस्वरसदृशं गानं भवतीत्यर्थः । अपध्वान्तं वरुणस्य =भिन्नकांस्यतुल्यं वरुणदेवताकगानं भवतीति । तान् सर्वानिपोपसेवेत । तान् अपध्वान्तगानभिन्नातिरिक्तान् सर्वानिवोद्गीथानुपसेवेत । वारुणं परिवर्जयेदिति ॥१॥

( अमृतत्वमित्यादि ) अमृतत्वप्राप्तिमागायानि गानद्वारा साधयानीति आगायेत् गानं सम्पादयेत् । प्रार्थनानुरूपं फलमाप्नोतीति । स्वधा पितृभ्य आगायानीत्यागायेदित्येवं सर्वत्र क्रियासम्बन्ध ऊहनीयः । एतानि देवामृतत्वादीनि फलानि मनसा हृदयेन ध्यायन् चिन्तयन् स्वरादिषु अप्रमत्तः प्रमादरहितो भूत्वा स्तोत्रगानं कुर्यात् ॥२॥

सर्वे स्वरा अचः आत्मानः अवयवतुल्याः । सर्वे ऊष्माणः शषसहाः प्रजापतेर्देहावयवतुल्याः सर्वे स्पर्शाः कादयो मावसानाः मृत्योरात्मानो देहावयवसदृशाः । तमुद्गातारं यदि कोऽपि तत्समीपमागत्योपालभेत त्वया दुष्टः स्वरादिः प्रयुक्तः तदा स उपासक इन्द्रमहं शरणं गतः तस्मादिन्द्रादिरेव तवोत्तरं दास्यतीति त प्रतिक्षेप्तारं ब्रूयात् वदेत् ॥३॥

प्रपन्नोऽभूवं स त्वा प्रतिवक्ष्यतीत्येन ब्रूयात् ॥४॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणो अग्रस्ता निरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥५॥

**इति छान्दोग्योपनिषदो द्वितीयाध्यास्य द्वाविंशः खण्डः ॥२२॥**

स इन्द्रादिः त्वा त्वा प्रतिपेक्ष्यति चूर्णयिष्यति त्वामिति ॥४॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्याः घोषवत्तयोच्चारणमिन्द्रस्य बलसम्पादकमित्यर्थः । सर्वे ऊष्माणः अग्रस्ताः अनन्तरप्रवेशिताः अनिरस्ताः बहिरक्षिप्ताः विवृता विवृतप्रयत्नयुक्ताः । (प्रजापतेरित्यादि) ऊष्मवर्णानां प्राजापत्यात्मकत्वात् अग्रस्तत्वादिगुणयुक्ततदुच्चारणे कृते प्रजापतेरात्मलाभो जायते । सर्वे स्पर्शाः लेशेनाल्पशः अनभिहिता अद्रुतोच्चारिताः । मृत्योरात्मानं परिहराणीति । स्पर्शानां कादीनां मृत्युस्वरूपत्वात् तेषां स्पर्शानां दोषेभ्यः परिहृत्योच्चारणे कृते मृत्योरात्मैव दोषेभ्यो रहितो भवतीति ॥५॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
द्वाविंशः खण्डः ॥२२॥

---

## अथ द्वितीयाध्याये त्रयोविंशः खण्डः

**त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो**

ओंकारद्वारा ब्रह्मण उपासनं दर्शयितुमाह (त्रय इत्यादि) त्रयः त्रिसंख्यकाः धर्मस्कन्धाः धर्मस्य विभागाः तत्र धर्मस्य श्रेयःसाधनस्य भागाः आश्रमलक्षणमार्गास्त्रय इत्यर्थः । तत्र यज्ञः प्रथमो मार्गः अत्र यज्ञाध्ययनदानैः प्रथमो-

Scanned by CamScanner

ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽव-सादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥१॥

प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या सम्प्रास्रवत्तामभ्यातपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रा-स्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवः स्वरिति ॥२॥

तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ॐकारः सम्प्रास्रवत्तद्यथा

गृहस्थाश्रमः सूचितो भवति । अध्ययनं वेदाभ्यासः । तपो द्वितीयो मार्गः तपः शब्दः कायक्लेशेनासिद्धः । तपसा वैखानसपरिव्राजकयोर्ग्रहणम् । एतयो-र्द्वयोरपि तपःप्रधानत्वात् । ब्रह्मचारी आचार्यकुलवासी : तृतीयः एकान्तत आचार्यकृते नियमतो देहं क्षपयन् तृतीय आश्रमः । सर्वे एते इति । एवं यथोक्तप्रकारेण त्रिसंख्यया संगृहीतानां चतुर्णामाश्रमाणां यो व्यक्ति-विशेषो ब्रह्मसंस्थः ब्रह्मणि परमात्मनि संस्थितिर्यस्य स ब्रह्मसंस्थो ब्रह्मनिष्ठः । स अमृतत्वमेति मुक्तियोग्यो भवति । ब्रह्मनिष्ठारहिताः केवला-श्रमकर्म कुर्वाणाः पुण्यलोकान्प्राप्नुवन्ति । केचित्तु ब्रह्मसंस्थशब्देन सन्यासाश्रमग्रहणमिति कथयन्ति तन्न । ब्रह्मणि संस्था यस्येति योगार्थस्य सर्वाश्रमसाधारण्यात् न चाश्रमान्तरव्यापारव्यग्रस्य ब्रह्मणि संस्था न सम्भवतीति वाच्यम् । स्वाश्रमोचितधर्मव्यग्रतायाः सन्यासिनामपि सम्भवादिति ॥१॥

ब्रह्मसंस्थोऽमृतत्वं प्राप्नोतीत्यमृतत्वसाधनं ब्रह्मोपासनमिति कथितं तत्प्रणवांगकमिति कथयितुं ओंकारं स्तौति (प्रजापतिरित्यादि) अभ्यतपत् साराकर्षणाय लोकान् पर्यालोचयन् तेभ्यः त्रयीविद्या सम्प्रास्रवत् सारतया निष्पन्ना जातेति । तां त्रयीवीद्याम् (तद्यथेत्यादि) येन प्रकारेण-निखिलान्यपि पलाशजातानि शंकुना पत्रनालेन संतृण्णानि व्याप्तानि भवंति

**शंकुना सर्वाणि पर्णानि सन्तृण्णान्येवमोङ्कारेण सर्वा वाक् सन्तृण्णा ॐकार एवेदं सर्वमोङ्कार एवेदं सर्वम् ॥३॥**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायस्य त्रयोविंशः खण्डः ॥२३॥**

अनेन प्रकारेण सर्वापि वाग् व्याप्तः "ओंकारो वै सर्वा वाग्" इति श्रुतेः। तस्मात् ओंकार एव सर्वं वाङ्मयम्। अत ओंकारद्वारा ब्रह्मोपासनं कार्यमिति समुदितार्थः। विद्यापरिसमाप्त्यर्था द्विरुक्तिः ॥२॥

इति छान्दोग्योपनिषद आनन्दभाष्ये द्वितीयाध्यायस्य
त्रयोविंशः खण्डः ॥२३॥

---

## अथ द्वितीयाध्याये चतुर्विंशः खण्डः

---

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनं रुद्राणां माध्यन्दिनं सवनमादित्यानाञ्च विश्वेषाञ्च देवानां तृतीयसवनम् ॥१॥**

**क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात्कथं कुर्यादथ विद्वान् कुर्यात् ॥२॥**

प्रसङ्गप्राप्तानि कानिचित् कर्माङ्गानि कथयितुं प्रस्तौति (ब्रह्मवादिन इत्यादि) प्रातःसवन–माध्यन्दिनसवन–तृतीयसवनेश्वरैः वसुरुद्रादित्य-विश्वदेवैः पृथिव्यन्तरिक्षस्वर्लोकानां स्वायत्तीकृततया तदवशिष्टस्य लोकस्याभावात् यजमानस्य लोकः कुत्र विद्यते इति ज्ञातव्यमित्यर्थ ॥१॥

(स यस्तन्नेत्यादि) यस्य यजमानलोकस्य ज्ञानमेव नास्ति सोऽविद्वान् कथं कर्म कुर्यात्। अथ विद्वान् कुर्यात्। अतः लोकस्वीकरणोपायभूत-

पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ्.मुख उपविश्य स वासवं सामाभिगायति ।।३।।

लो३कद्वारमपावार्ण २३३ पश्येम त्वा वयं रा ३३३३३ हुं ३ आ ३३ जा ३ यो ३ आ १२४५ इति ।।४।।

अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दष वै यजमानस्य लोक एतास्मि ।।५।।

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वो-त्तिष्ठति तस्मै वसवः प्रातःसवनं संप्रयच्छन्ति ।।६।।

पुरा माध्यन्दिनस्य सवनस्योपाकरणाज्जघनेनाग्नीध्रीयस्यो-

वक्ष्यमाणं सामगान होममंत्रोत्थानरूपं विदित्वैव कुर्यादित्यर्थः तदेव दर्शयति ।।२।।

(पुरेत्यादि) पुरा पूर्वं प्रातरनुवाकारम्भात् । गार्हपत्यस्य जघनेन पश्चात् उदङ्.मुख उपविश्य वासवं वसुदेवताक साम स विद्वान् गायेदित्यर्थः ।।३।।

तदेव साम दर्शयति (लोकद्वारमित्यादि) हे अग्ने पृथिवीलोकप्राप्तये द्वारमपावृतेन द्वारेण त्वां राज्याय पृथिवीलोक प्राप्तिफलाय पश्येम ।।४।।

(अथ जुहोतीत्यादि) अथानन्तरं वक्ष्यमाणमंत्रेण हवनं करोतीत्यर्थः । होममंत्रमाह (नमोऽग्नये इत्यादि) नमोऽग्नये लोकनिवासाय । पृथिवीक्षिते पृथिवीनिवासाय (अग्नये नमः) मे मह्यं यजमानाय लोकं विन्द प्रापय ।।५।।

एष वै मम यजमानस्य लोकः यजमानोऽहमत्र लोके आयुषः परस्तात् मरणादनन्तरम् । एतास्मि आगन्तास्मि । स्वाहेति जुहोति ।

(अपजहीत्यादि) एवं हवनं कृत्वा तदनन्तरं परिघं लोकद्वारार्गलं

दङ्‌मुख उपविश्य स रौद्रं सामाभिगायति ॥७॥

लो३कद्वारमपावार्ण ३३ पश्येम त्वा वयं विरा ३३३३ हुं ३ आ ३३ जा ३ यो ३ आ २११११ इति ॥८॥

अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकं मे यजमानाय विन्देष वै यजमानस्य लोक एतास्मि ॥९॥

अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वो-त्तिष्ठति तस्मै रुद्रा माध्यन्दिनं सवनं सम्प्रयच्छन्ति ॥१०॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्‌मुख उपविश्य स आदित्यं स वैश्वदेवं सामाभिगायति ॥११॥

लो३कद्वारमपावा३र्णू ३३ पश्येम त्वा वयं स्वरा ३१२१ हुं २ आ ३३३ जा ३ यो ३ आ ३४५ इति ॥१२॥

आदित्यमथ वैश्वदेवं लो३कद्वारमपावा३र्ण ३३ पश्येम त्वा वयं साम्ना ३१३ १२ हुं ३ आ ३३ जा ३ यो ३ आ ३३३३३ इति ॥१३॥

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥१४॥

अपजहि अपनय इति एतं मन्त्रं उक्त्वोत्तिष्ठति ।

(तस्मै इत्यादि) एवं प्रकारेण सामगान होममन्त्रोतपादकर्त्रे यजमानाय वसव- प्रातःसवनसम्बन्धिलोकं प्रयच्छन्ति ददाति । अननैव प्रकारेणाग्रेऽप्यर्थो ज्ञातव्यः । अग्नीध्रीयस्य = अग्नेः रौद्रं रुद्रदेवताकम् । वैराज्याय । अन्तरिक्षलोकफलप्राप्तये इति ।

(अथेति) अथ नमो वायवे इत्यादि मन्त्रेण जुहोतीत्यर्थः । अन्तरिक्ष-क्षिते अन्तरिक्षनिवासायेत्यादिकं सर्वं पूर्वमंत्रवदेव ज्ञातव्यमिति ।

**एष वै यजमानस्य लोक एतास्म्यत्र यजमानः परस्ता-
दायुषः स्वाहाऽपहतपरिघमित्युक्त्वोत्तिष्ठति ॥ १५ ॥**

**तस्मा आदित्याश्च विश्वे च देवास्तृतीयं सवनं सम्प्रय-
च्छन्त्येष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं
वेद ॥ १६ ॥**

**इति छान्दोग्योपनिषदि द्वितीयाध्यायस्य
चतुर्विंशः खण्डः ।**

**इति छान्दोग्योपनिषदो द्वितीयाध्यायः ॥ २ ॥**

माध्यन्दिनमिति माध्यं दिनसवनसम्बन्धि लोकम् । आहवनीयाग्नेरित्यर्थः । आदित्यदेवताकम् वैश्वदेवं विश्वेदेवदेवत्यम् । लोकद्वारमिति स्वाराज्याय स्वर्गलोकाय । एतदन्यत्सर्वम् पूर्ववदेव ज्ञातव्यम् । एष ह वै इत्यादिमन्त्रो परिमाणं माहात्म्यम् । य एवं वेद । य एवं यथोक्तं कर्तुं जानाति । द्विरुक्तिरादरार्था ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये द्वितीयाध्यायस्य
चतुर्विंशः खण्डः ॥ २४ ॥

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः
छान्दोग्योपनिषदो द्वितीयाध्यायः समाप्तः ।

સમરીતિર્મહાતેજાઃ પરબ્રહ્મ સનાતનઃ ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ ॥

Scanned by CamScanner

श्रीरामाय नमः ।

अथ श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायाः

# छान्दोग्योपनिषदः

## तृतीयाध्याये प्रथमः खण्डः

**असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशो-ऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥ १ ॥**

द्वितीयाध्यायस्यान्तिमभागे "यज्ञस्य मात्रां वेदे"त्यादिना यज्ञस्य निर्देशः कृतः सर्वयज्ञानां कार्यनिवृत्तिलक्षणः सूर्यः स च सर्वप्राणिनामुपकारक इति यज्ञकथनानन्तरं तदीयकार्यसूर्यविषयकमुपासनं विशिष्टफलप्राप्तये मधु-विद्यानामकं प्रस्तूयते (असौ वा आदित्य इत्यादि)असौ प्रत्यक्षतया समुपल-भ्यमान आदित्यः सूर्यः देवमधु देवानां वसुप्रभृतीनां मधु इव मधुः यथा प्राकृतं माक्षिकं मधु लोकानामामोदजनकं तथैव सूर्यात्मकमधु वस्वादीनां देवानामामोदकारणत्वात् मधु इति व्यपदिश्यते सर्वयज्ञफलात्मकत्वात्सूर्यस्य । तस्मात्सूर्ये मधुदृष्टिः कर्तव्येत्यर्थः। कथं सूर्यो मधुरूपस्तत्राह (तस्येत्यादि) तस्य मधुरूपस्य सवितुर्द्यौरेव तिरश्चीनवंशः तिरश्चीनश्चासौ वंशश्चेति तिरश्चीनवंशोऽवलम्बनस्थानम् अत एव तिर्यग्गत एव लक्ष्यते। अन्तरिक्षमपूपः तस्य सूर्यलक्षणमधुनोऽन्तरिक्षमपूपः मधुनामाश्रयलक्षणोऽपूपस्तिरश्चीन-वंशाश्रितः सन् लम्बमानो भवतीति । मरीचेः पुत्राः मरीचयः सूर्येणाकृष्टाः भौमा आपः पुत्राः पुत्रा इव पुत्रा भ्रमरबीजभूता मध्वपूपान्तरर्गतछिद्रे विद्य-मानाः सूक्ष्मकीटा इत्यर्थः ।। १ ।।

Scanned by CamScanner

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एव मधुकृत ऋग्वेद एव पुष्प ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

**एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रीयं वीर्यमन्नाद्यं रसोऽजायत ॥ ३ ॥**

(तस्य ये प्रांच इत्यादि) तस्य मध्वाधारसूर्यस्य मधुनो ये प्रांच प्राग् दिगवस्थिताः रश्मयः किरणसमुदायास्ता एव प्राच्यः पूर्वदिगवच्छिन्ना मधुनाड्यो मधुच्छिद्राणि मधुनामाश्रयभूतछिद्राणीत्यर्थः । ऋच एव ऋग्वेदसंबन्धिनो मंत्रा एव मधुकृतो मधुसंपादका भ्रमराः ईषद्रक्तवर्णं सूर्याश्रितं मधु यत् तस्य सम्पादकाः ऋग्वेद एव पुष्पम् । तत्र ऋग्वेदा ऋग्वेदविहितं कर्म तदेव पुष्पस्थानीयम् शब्दराशेर्वेदस्य भोग्यरसनिःश्रावासम्भवात् । कर्मणा कर्मफलभूतमधुरसनिःश्रावसम्भवादिति । पुष्पस्थानापन्न ऋग्वेदप्रतिपादित कर्मणि मधुकरलक्षणऋग्वेदमन्त्रैराकृष्य मधुरूपेण सम्पाद्यमानो रसः कीदृशस्तत्राह ( ता अमृता आपः ) इति ताः कर्मणि प्रयुज्यमानाः सोमघृतदुग्धादिलक्षणा आपो जलानि संस्कृते वह्नौ प्रयुक्ताः पाकाभिनिवृत्ता अमृता अमृतवद् विलक्षणा अत्यन्तरसवत्यो भवन्तीति ।।२।।

ता वा एता ऋचो ऋग्मन्त्रा भ्रमरसदृशाः पुष्पेभ्यो रसमाददानाः एत ऋग्वेदं ऋग्वेदविहितं कर्म पुष्पलक्षणम् । अभ्यतप्य त्अभितापं कृतवत्य इव तस्याभितप्तस्य यशोविश्रुतत्वम् तेजोविलक्षणा दीप्तिः शरीरादिगता। इन्द्रियम् वीर्यम् सामर्थ्यविशिष्टे इन्द्रियद्वारेण आयमानं विलक्षणं बलम् । अन्नाद्यम् । अन्नं च तदाद्यं च । यदुपभोगात्प्रतिदिनं वस्वादिदेवानां स्थितिर्भवति तदन्नाद्यम् । एतादृशो विलक्षणो रसोऽजायत वेदविहितयागादिलक्षणकर्मसकाशात्समुत्पन्नोऽभूत् । ऋग्मन्त्रैः स्तोत्रशास्त्राद्यंगस्वरूपतामुपगतैः क्रियमाणं यागदिलक्षण कर्मं मधुसम्पादकं सोमाज्यपय आदि

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम् ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य प्रथमः खण्डः ।

## अथ तृतीयाध्याये द्वितीयः खण्डः ।

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूंष्येव मधुकृता यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥

रसं पुष्पमिव भ्रमरैराकृष्यमाणं मुंचति तेन यशस्तेज इन्द्रियपटुत्वादि स्वरूपं फलं समुत्पन्नं भवतीति भावः ॥३॥

(तद्व्यक्षरदित्यादि) तत यश आदि अन्नाद्यलक्षण फलम् व्यक्षरत् अपगतमभूत् । गत्वा च तत्फलं आदित्यं सूर्यम् अभितः पार्श्वतः अश्रयत् आश्रयं कृतवन् । तदेतत्सवितरि प्रत्यक्षतः परिदृश्यमानम् यत् रोहितं रूपं तत् । यागादिकर्मसम्पादितयशस्तेजप्रभृति फलमेवेति ॥४॥

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

अथानन्तरम् अस्यादित्यस्य ये दक्षिणा दक्षिणादिगवस्थिता रश्मयः किरणसमुदायाः ता एवास्यादित्यस्य दक्षिणा दक्षिणादिगवच्छिन्ना मधुनाड्यो मध्वाधारछिद्राणि यजूंष्येव यजुर्मन्त्रा एव मधुकृतो भ्रमरा भ्रमरवत् मधुसम्पादकाः यजुर्वेद एव पुष्पम् यतो मधुकरसदृशा मन्त्राः फलमभिनिर्वर्तयन्ति । ताः सोमाज्यपयःप्रभृतिकाः आपः अमृता अत्यन्तरसवत्य इति ॥ १ ॥

तानि वा एतानि यजूंष्येतं यजुर्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लं रूपम् ॥ ३ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
द्वितीय खण्डः ॥ २ ॥

## अथ तृतीयाध्याये तृतीयः खण्डः ।

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधु-

(तानि वा एतानि यजूंषि) यजुर्वेदमन्त्रा यजुर्वेदमभ्यतपन् अभितापं कृतवन्तः तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत। पूर्ववदेव व्याख्यातव्यो मन्त्र इति ॥ २ ॥

(तद्व्यक्षरत्) तत् यश आदि स्वरूपं फलं कर्मजनितम् व्यक्षरत् विशेषेण गमत् (तदादित्यमित्यादि) तत्फलम् गत्वा च सूर्यमभितः पार्श्वतः अश्रयम् आश्रितवदित्यर्थः तद्वा एतत् आदित्ये प्रत्यक्षतः परिदृश्यमानं यत् शुक्लं सर्वतः श्वेतरूपं तत्कर्मसम्पादितयशस्तेजप्रभृतिफलरूपम्। अर्थात् श्वेतरूपे तद्बुद्धिः कर्तव्येति ॥ ३ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

अथादित्यस्य ये प्रत्यंचः प्रतीचीदिगवस्थिता रश्मयः ता एवास्यादित्यस्य प्रतीच्यः प्रतीचीदिगवच्छिन्ना मधुनाड्यो मधुच्छिद्राणि। सामान्येव साममंत्रा एव मधुकृतो भ्रमरसदृशा रसनिष्पादकाः सामवेद एव पुष्पम् रसनिष्प-

नाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतं सामवेदमभ्यतपंस्तस्याभित-प्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णं रूपम् ॥ ३ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
तृतीय खण्डः ।

# अथ तृतीयाध्याये चतुर्थः खण्डः

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुनाड्यो-ऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपंस्तस्या-भितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

त्तिस्थानम् ताः कर्मणि प्रयुज्यमानाः सोमाज्यपयोरूपा आपो जलानि अमृता अत्यंतरसवत्यः ॥ १ ॥

तानि वा एतानि सामानि साममंत्राः सामवेदमभ्यतपन् इत्यादि क्रमेण पूर्वप्रकरणवदेवेदं प्रकरणमपि व्याख्येयमिति ॥२॥३॥

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य
तृतीयः खण्डः ॥ ३ ॥

Scanned by CamScanner

तद्वा एतद्यदेतदादित्यस्य परं कृष्णं रूपम् ॥ ३ ॥ ... 

तद्य त्तरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य परं कृष्णं रूपम् ॥ ३ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य चतुर्थः खण्डः ।

## अथ तृतीयाध्याये: पञ्चम:खण्ड:

**अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥**

(अथ ये इत्यादि) पूर्वप्रकरणवदेव व्याख्येयम् ।(अथर्वाङ्गिरस इत्यादि) अथर्वणा तन्नामकेन ऋषिणा तथा अङ्गिरसा अङ्गिरो नामकेन ऋषिणा दृष्टा ये मंत्रास्ते अथर्वाङ्गिरसो मन्त्रास्त एव मधुकृतः, इतिहासपुराणं पुष्पम् । इतिहासपुराणप्रतिपादितकर्मणि अथर्वाङ्गिरोमंत्राणां विनियोगात् ऋग्वेदादिवत् इतिहासपुराणानां पुष्पत्वकथनमिति ज्ञातव्यम् तद्वा एतदित्यादि परः कृष्णं रूपं अतिशयेन कृष्णरूपमित्यर्थः ।। १।२।३।।

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य
चतुर्थः खण्डः ।। ४ ।।

(अथ येस्योर्ध्वा रश्मयः) इत्यादिकं पूर्ववदेव व्याख्येयम् । गुह्या एवादेशा मधुकृतः तत्र गुह्या गोप्या रहस्या एव मधुकृतो भ्रमरा ब्रह्मविषयकोपनिषद् रहस्या आदेशा इत्यर्थः ब्रह्मैव प्रणवाख्यं पुष्पं पुष्पस्थानीयम् । अन्यत् सर्वं पूर्ववत् । आदित्यस्य मध्ये क्षोभत इवः स महितदृष्टेः पुरुषस्य सूर्यमण्डलमध्ये क्षोभत इव सञ्चलतीव दृश्यते । न हि सर्वैस्तथाऽनुभूयते किन्तु ये समाहितदृष्टयस्त एव तथा पश्यन्तीति भावः । ते वा एते रसानां रसा इत्यादि। ते वा एते रोहितादि कारसानां वेदानामपि रसाः सारभूताः लोकसारत्वात् । वेदा ऋग्वेदादयो रसाः तेषां सारभूतानां वेदानां एते रोहि-

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य मध्ये क्षोभत इव ॥ ३ ॥

ते वा एते रसानां रसा वेदा हि रसास्तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

तादयो रसा अतिशयेन सारभूताः सारसारत्वात् । तानि वा एतानि रोहितादीनि अमृतानां विलक्षणकर्मप्रतिपादकानांवेदानामपि अमृतानि वेदप्रतिपादितानामतिभोग्यत्वात् अमृतादप्यमृतम् । लोके हि सारभूतो वेदः तत्प्रतिपादितकर्मनिष्पाद्यत्वात् रोहितादिरूपाणामतिसारत्वम् । तथा-इष्टसाधनकर्मप्रतिपादकतया वेदोऽमृतः वेदेभ्यऽपि रोहितारूपाणां तत्प्रतिपाद्यकर्मनिष्पाद्यानां विस्पष्टं भोगजनकत्वादमृतादप्यमृतत्वं भवतीति भावः। तदयमत्र सक्षेपः आदित्यस्य प्राच्यादि देशस्थितरश्मिलक्षणनाडीतः तत्तद्-वेदोक्तकर्मात्मकपुष्पेभ्यः तत्तद्वेदान्तर्गतमन्त्रात्मभ्रमरद्वारा सूर्यमण्डले प्रापितानि सोमाज्यपयः प्रभृतिद्रव्येभ्यो जायमानानि यशस्तेजोलक्षणानि रोहितं शुक्लं कृष्णं परकृष्णंमध्ये क्षोभत इवेत्यादिना कथितानि रोहितादीनि पञ्चामृतानि आदित्यमध्याश्रितानीति ।

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

# अथ तृतीयाध्याये: षष्ठः खण्डः ।

तद्यत्प्रथममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव

एतानि पञ्चापि अमृतानि वसुरुद्रादित्यमरुतसाध्यगणदेवैरुपभोग्यानि भवन्ति तथैतदुपासकानां पुरुषाणां वस्वादिदेवत्वप्राप्तिपूर्वकश्रीरामात्मकब्रह्मप्राप्तिरपि भवतीति प्रतिपादयितुमाह (तद्यत्प्रथममित्यादि) तद् यत् प्रथममममृतं रोहितादिलक्षणकम् । तदमृतम् वसवस्तदा देवगणा अग्निना मुखेन बह्न्यात्मकमुखद्वारेणोपजीवन्ति उपभोगं कुर्वन्ति । न हि देवा अस्मदादिवत् देहावयवमुखद्वारा भक्षयन्ति किन्तु वह्न्यात्मकमुखेनैवोपभुज्यमानं वस्तु खादन्ति "अग्निमुखा हि देवाः" इति श्रुतेः । तत्र देवानामस्मदादिवत् कवलाहारं प्रतिषेधति श्रुतिः (न ह वै देव इत्यादि) न वै देवा अश्नन्ति पिबन्ति ते देवा रोहितादिलक्षणममृतं न अश्नन्ति चर्वणादिव्यापारं न कुर्वन्ति न वा अस्मदादिवत् पानमेव वा कुर्बन्ति किन्तु एतदेवामृत दृष्ट्वा तृप्यन्ति । यशस्तेजप्रभृतिक रोहितादिक रूपं यथायथश्चक्षुरादिकरणद्वारेण-समुपलभ्य तृप्यन्ति यथा स्वकृतकर्मफलोपभोगाय चन्द्रमण्डलं ये प्राप्तास्तान् तत्र देवा भक्षयन्ति इति श्रुतौ यथा देवास्तैः सह विहरणादिकं कुर्वन्ति इत्यर्थस्तथैवात्रापीति ॥ १ ॥

ते देवा वसवः एतदेव रूपं रोहितादिलक्षणमभिलक्ष्य नुभूयसं विशंति भोगकरणानन्तरमुदासीना भवन्ति । एस्माद्रूपादुद्यंति । एतेषाममृतानां भोगकाले समुपस्थिते तद्रूपानुभवमुद्दिश्योद्यंति सोत्साहाः सावधानाश्च भवन्तीति ॥ २ ॥

मधुविद्योपासकस्यापि एतादृशफलप्राप्तिं दर्शयितुमा (स य एतदेव-

**मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविश-त्येतस्माद्रूपादुदेति ॥ ३ ॥**

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥**

**इति छान्दोग्योपनिषदि तृतीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

मित्यादि) स य उपासक एवं यथोक्तप्रकारेण। अमृतं वसुदेवतृप्तिप्रयोजक-दर्शनगोचरत्वलक्षणवसूपजीव्यत्वादिना रोहिताद्यात्मकममृतं वेद विजा-नाति तादृशमुपासनं करोति। तादृश उपासकस्तत्क्रतुन्यायेन तादृशमुपा-सन कुर्वन् वसूनामेवैकः वसूनां मध्येऽन्यतमो भूत्वा वसुत्वं प्राप्येत्यर्थः तथैव भवति। अग्निनैव मुखेन वह्निद्वारेण एतदमृतं दृष्ट्वा करणग्रामेणानुभूयतृप्यति अतिशयेन तृप्तो भवति। स एतदेवरूपमभिसंविशति। एतद्रूपमनुपूय भोगा-नन्तरमुदासीना भवन्ति। एतस्माद्रूपादुद्यन्ति। भोगकाले प्राप्ते सति एत-द्रूपानुभवमुद्दिश्य सोत्साहा भवंति अतिशयेनोत्साहयुक्ताभवंतीत्यर्थः॥ ३ ॥

कियत्कालपर्यन्तं मधुविद्योपासकोऽमृतमुपजीवति तत्राह (स यावदादित्य इत्यादि) स विद्वान् यावत्कालपर्यन्तम् आदित्यः सूर्यः पुरस्तात् पूर्वदिशि उदेता उदयं यास्यति पश्चात् प्रतीच्यामस्तेमेताऽस्तं यास्यति। एतावान् हि वसुदेवस्य भोगकालः तावत्कालपर्यन्तम् स उपासको वसूनामाधिपत्यं स्वाराज्यं पर्येता परितो गन्ता भवति। यथा चन्द्रमण्डलस्थः केवलकर्मकारी देवाधीनो देवानामन्नभावं गच्छति न तथा मधुविद्योपासको वसूनां पराधीनो भवति किन्तु आधिपत्यं स्वराड्भावं च प्राप्नोति। वस्वादिलोकगतोऽपि वसूनामंगभावं नाधिगच्छतीति ॥ ४ ॥

**इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥**

Scanned by CamScanner

## अथ तृतीयाध्याये सप्तमः खण्डः ।

अथ यद् द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुदेति ॥ ३ ॥

(अथेत्यादि) अथ यत् द्वितीयं शुक्लरूपाख्यममृतमतिसारतमम् । तदमृतम् । रुद्रास्तन्नामका देवा उपजीवन्ति तदुपभोगं कुर्वन्ति । इन्द्रेण मुखेन । नास्मदादिवत् ते रुद्रादयो भुञ्जन्ति किन्तु एतदेवामृतं दृष्ट्वा सर्वैः करणग्रामैर्यथास्वमुपलभ्य तृप्यन्ति तृप्ता भवन्ति ॥ १ ॥

एतदेव रूपमभिसंविशन्ति तत्कालमुपभोगे उदासीना भवन्ति । तस्माद्रूपास्दुद्यन्ति । यदा वै पुनर्भोगावसरो जायते तदोपभोगार्थमतिशयेनोत्साहवन्तो भवन्ति ॥ २ ॥

संप्रत्युपासकस्यापि फलं दर्शयति । (स य इत्यादि) स य उपासक एतदेव पूर्वोक्तममृतं शुक्लरूपात्मकं वेद विजानाति तदुपासनं करोति स रुद्राणामेवैकोऽन्यतमो भूत्वा रुद्रत्वमवाप्येन्द्रात्मकमुखेनामृतम् दृष्ट्वा यथायथमनुभूयेत । एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति पूर्ववदेवार्थो ज्ञातव्यः भोगकालावधिं दर्शयति (स यावदादित्य इत्यादि)स उपासको यावत् कालपर्यन्तमादित्यः पूर्वस्यां दिश्युदेता पश्चिमायां च दिश्यस्तमेता । यावता कालेनादित्यस्योदयास्तमयौ। ततो द्विः द्विगुणं कालं यावत् दक्षिणतो दक्षिणस्यां दिश्युदेता । उत्तरत्र उत्तरस्यां दिशि चास्तमेता । एतावान् हि कालो रुद्राणाम् भोगकालस्तावन्तमेव कालमुपासकोऽपि रुद्राणामाधिपत्यं

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्ता वद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

## अथ तृतीयाध्याये: अष्टमः खण्डः ।

अथ तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन

स्वाराज्यं पर्येता परितो गन्ता । न हि केवलकर्मिवत् पराधीनः स्यात् अपितु सर्वथैव स्वातंत्र्यं भजते ॥ ४ ॥

इति छान्दोग्योपनिषद आनन्दभाष्ये तृतीयाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

तृतीयामृते स आदित्यो यावत्कालपर्यन्तं दक्षिणस्यां दिश्युदयं याति उत्तरस्यां चास्तमयं याति तदपेक्षया द्विगुणं कालं यावत्पश्चिमायामुदयं याति पूर्वस्यां चास्तमयं गच्छति तावत्कालं आदित्यस्येति तावत् काल-पर्यन्तमुपासकस्तत्रत्यमाधिपत्यं स्वाराज्यं लभते । चतुर्थामृतभोगावसरे तु यावत्कालपर्यन्तमादित्यः पश्चिमायामुदयं लभते पूर्वस्यां चास्तमय तदपेक्षया द्विगुणितं कालं यावदादित्यः उत्तरस्यामुदेता दक्षिणस्यां च दिश्यस्तमयं यास्यति तावान् कालो मरुताम् तावत्कालं यवात्तदुपासकस्तदाधिपत्यं स्वाराज्यं लभते । पचमामृते तु यावत्कालं यावदादित्य उत्तरस्यामुदयं यास्यति दक्षिणस्यां चास्तममाप्स्यति तदपेक्षया द्विगुणितकालेनौर्ध्वमुदेष्यति अर्वागस्तमयं यास्यति । एतावांश्च कालः साध्यानां तावत् कालपर्यन्तं तदुपासकस्तदाधिपत्यं स्वाराज्यमाप्स्यतीति । अन्यत्सर्वं प्रथमखण्डव्याख्यानुसा-

मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेदाऽऽदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
अष्टमः खण्डः ॥ ८ ॥

## अथ तृतीयाध्यायः नवम खण्डः ।

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥

एतदेवरूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेवरूपमभिसंविशति एतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेवदावदाधिपत्यं

स्वाराज्यं पर्येता ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
नवमः खण्डः ॥ ९ ॥

## अथ तृतीयाध्यायः दशमः खण्डः ।

अथ पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥

त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुदेति ॥ ३ ॥

रेणैव ज्ञातव्यमीति यद्यपि पश्चादुत्तरत ऊर्ध्वमेंता विरीतक्रमेणास्तमयं यास्यति पूर्वस्मात पूर्वस्मात् द्विगुणोत्तरोत्तरेण कालेनादिकथनम् अपौराणिकमतमिवाभाभति । यद् आदित्यस्य चतुर्दिशमिन्द्रयमवरुणसोमपुरीषु उदयास्तमयकालस्य समानत्वमेव पुराणेषूक्तत्वात् मानसादुत्तरे:स्थितस्य मेरुपर्वतस्य शिरसि सूर्यस्य प्रदक्षिणावृत्तेः समानत्वादिति । तथाप्यमरावत्यादिनगरीणां द्विगुणोत्तरोत्तरेण समयेनोद्वासः स्यात् । तत्रोदय आदित्यस्य तल्लोकवासिनां लोकानां चक्षुर्विषयतेव तदभाव एवास्तमय न तु परमार्थत उदयोऽस्तमयनं वा आदित्यस्य सर्वदैवोदितत्वादेव। यदा खलु तत्तल्लोके लोका न भवन्ति तदा तत्र गच्छन्नपि नैवोदेता नास्तमेता चक्षुर्विषयत्वस्य षदभावस्य चाभावात् तथा अमरावत्याः सकाशात् द्विगुण काल यमपुरी वसति अतस्तल्लोकवासिनः प्राणिनः प्रतिदक्षिणत एवोदेति सूर्योऽस्तमेति उत्तरत इति कथ्यतेऽस्मदबुद्ध्यपेक्षया। एवमेव तदुत्तरास्वपिनगरीषु

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता-द्विस्तावदूर्ध्वंउदेताऽर्वाङस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
दशमः खण्डः ॥ १० ॥

## अथ तृतीयाध्यायः एकादशः खण्डः ।

अथ तत ऊर्ध्व उदेत्यनैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेश श्लोकः । १ ॥

न वै तत्र न निम्लोचे नोदियाय कदाचन । देवास्तेनाहं सत्येन मा विरोधिषि ब्रह्मणेति ॥ २ ॥

योजना कर्तव्या । सर्वत उत्तरे एव मेरुर्भवतीति नियमात् । यथा खलु अमरावतीनगर्यां मध्याह्नगतः सूर्यो भवति तस्मिन्समये यमपुर्यामुदयन् सविता दृष्टो भवति, यमपुर्यां यदा मध्याह्नगतो भवति सूर्यस्तदा वारुण्यामुदयन् दृश्यः । तथैवोत्तरस्यामपि प्रदक्षिणावृत्तेः समानत्वात् । इलवृत्ते तु सर्वतः पर्वताप्राकारावृतत्त्वेनादित्यरश्मयो निवारिता इति सवितोर्ध्वः इवोदयं यातीव । अर्वागस्तमेता दृश्यते पर्वतोर्ध्वच्छिद्रप्रवेशादादित्यप्रकाशस्येति अन्यत्सर्वं पूर्ववदेव ज्ञातव्यम् ।

इति छान्दोग्योपषिषद आनन्दभाष्ये तृतीयाध्यायस्य
अष्टम-नवम-दशमखण्डाः ॥ ८।६।१० ॥

पूर्वोक्तप्रकारेण वसुद्रादित्यमरुत्साध्यदेवगणोपभोगयोग्यरोहितशुक्लकृष्णपरःकृष्णादिपञ्चरूपात्मकपञ्चामृताश्रयदेवमधुत्वरूपितज्योति—मण्डलाख्यरूपसंवलितस्योदयास्तमयनादिकार्यविशिष्टस्य सूर्यनामकसूर्यशरी-

**न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥ ३ ।**

**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजा-**

रकुकार्यशरीरविशिष्टस्य रामाख्यपरब्रह्मण उपासनं समुपदिश्य तदनन्तरं नामरूपादिकार्यरहितस्याकार्यावस्थसूर्यजीवशरीरकस्य तस्यैव परब्रह्मण उपासनं प्रदर्शयितुमाह(अथ तत ऊर्ध्वं इत्यादि)अथ कार्यब्रह्म दिनात्मककल्प-स्य समाप्तेरनन्तरम् तत ऊर्ध्वं उदेत्य । उदयग्रास्तमयद्वारेण प्राणिनामनुग्रह करणात् ऊर्ध्वं उदेत्य । उदयास्तमयादि प्रयुक्तप्राणिनामनुग्रहरहितो भूत्वा।। नैवोदेता पुनर्नोदयं यास्यति । नास्तमेता । न वा पुनरस्तमयं यास्यति किन्तु एकल एव मध्ये स्थाता। एकस्वभाव उदासीनतया स्थातेत्यर्थः। तदेतत् श्लोकः तदेतस्मिन् विषये देवं प्रति केनचित् योगिना कथितः श्लोकः "हे देवा तत्र तस्मिन् आदित्यभावमोक्षसमये: सः मुक्तादित्यान्तर्यामी परमात्मा न निम्लोचे कदाचिदपि अस्तं नो याति । कदाचन कथमपि नोदयाय नोदयं याति । तेन सत्येन वाक्येन ब्रह्मणा अहं न विरोधिषि विरोधं न गच्छामि । ब्रह्मणा सह ममाप्राप्तिः कदाचिदपि न भवतीति । सत्यमेव तेन योगिना कथितमिति श्रुतिर्वदति (न ह वेत्यादि) यः खलूपासक एतां मधुविद्यालक्ष-णाम् ब्रह्मोपनिषदम् ब्रह्मविद्याम् वेद विजानाति तादृशमुपासनं करोतीत्यर्थः अस्मै ब्रह्मविदे आदित्य; सूर्यो नोदेति न निम्लोचति । अस्तमयमपि नो याति । सूर्यस्योदयास्तमयाभ्यां तस्य प्रयोजनं न भवतीत्यर्थः। असौ ब्रह्म-वित्सकृत् दिवैव भवति एकदैवादित्योदयो भवति ततः परं सर्वदा दिवैव प्रकाशव्यतिरेकः कदापि न भवतीति । सर्वदा सर्वविषयकसाक्षात्कारो भवत्येवेति भावः ।। ३ ।।

संप्रति मधुविद्या येन प्रकारेण लोके समागता तं प्रकारं दर्शयितुं संप्रदाय माह (तद्धैतदित्यादि) तदेतत् मधुविज्ञानं ब्रह्मा हिरण्यगर्भः प्रजापतये विराजे

भ्यस्तद्धै तदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥

इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्प्रणाय्याय-वान्तेवासिने ॥ ५ ॥

नान्यस्मै कस्मै च न यद्यप्यस्मा इमा मद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥६॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

उवाच प्रोक्तवान् प्रजापतिः विराट् मनवे मधुविद्यां प्रोवाच, मनुश्च प्रजाभ्यः इक्ष्वाक्वादिभ्यः प्रोवाच । (तद्धं तदित्यादि) तदनन्तरम् उद्दालकस्य पिता ज्येष्ठाय स्वपुत्रायारुणये उद्दालकाय तदाख्यऋषये ब्रह्म प्रोवाच प्रोक्त-वान् ॥ ४ ॥

(इदं वा वेत्यादि) तत् तस्मात् कारणात् अन्योऽपि कोऽपि पिता इदं ब्रह्मविज्ञानम् जेष्ठाय सर्वप्रियाय पुत्राय प्रब्रूयात् । अथवा प्रणाय्याय योग्यायान्तेवासिने शिष्याय इदं ब्रह्मविज्ञानं प्रब्रूयात् ॥ ५ ॥

नान्यस्मै अन्यस्मै पुत्रशिष्यव्यतिरिक्ताय कस्मैचिदपि एतद् ब्रह्मविज्ञानं न प्रब्रूयात्। अन्यस्मै मधुविद्यादानप्रतिषेधो मधुविद्याया गौरवातिशयं दर्शयति (यद्यपीत्यादि) यद्यपि अस्मै मधुविद्यादात्रे आचार्याय कश्चित् अद्भिः जलैः परिगृहीतां समुद्रैः परिवेष्टितां महीम् धनस्य पूर्णाम् समस्तभोगोपकरणै-र्युक्तां सम्पूर्णामपि पृथिवीं दक्षिणारूपेण दद्यात्, तथापि एतद्दानात् एतदेव मधुविद्यादानमेव भूयोऽधिकम्। अर्थात् मधुविद्यादानमेव भूयोधिकफलं न तु वाहशपृथिवीदानम् । ततो भूय इति ततो भूय इति द्विर्वचनम् मधुविद्यायाः

# अथ तृतीयाध्यायः द्वादशः खण्डः ।

गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री

आदरातिशयं दर्शयति ।। ६ ।।

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
एकादशः खण्डः ।। ११ ।।

चतुष्पादवत्वषड्विधत्वधर्मद्वारा परब्रह्मणो गायत्रीमन्त्रसादृश्यानुसन्धानलक्षणा विद्या संप्रति प्रस्तूयते गायत्री वा इत्यादिना) यथा "इन्द्रः शचीपतिः''बलेन पीड़ितः दुश्च्यवनो वृषाः समित्सु सा सहि''इत्यादिरूपेण गायत्री चतुष्पादवती । तथा प्रत्येकपादस्य षडक्षरघटितत्वेन षड्विधा-गायत्री तथैव ब्रह्मापि सर्वभूतशब्दितात्मवर्ग एकः पादः तथा कर्मसंपादित-भोगायतनलक्षणः पृथिवीलोकोऽप्येकः पादः भोगोपकरणं शरीरमेकः पादः आत्मस्थितिप्रयोजकप्रदेशविशेषलक्षणं हृदयमेकः पाद इति भूतपृथिवी-शरीरहृदयलक्षणाश्चत्वारः पादाः । तथा गानकर्मत्राणकर्मत्वसर्वभूतप्र-तिष्ठात्वसर्वभूतानतिवर्त्यत्व सर्वप्राणिप्रतिष्ठात्वसर्वप्राणानतिवर्त्यत्व-लक्षणप्रकारषट्कयुक्ततया षड्विधमपि । इति गायत्रीसादृश्यानुसंधानं-कर्तव्यमित्याशयेनाह (गायत्री वा इत्यादि) अत्र गायत्रीपदं न मंत्रात्मक-गायत्रीबोधकमपितु ब्रह्मबोधकम् मंत्रलक्षणगायत्र्यां भूतादिपादचतुष्टयास-म्भावात् तस्मात् गायत्रीशब्देन ब्रह्मैव प्रतिपादितं भवति । (गायत्री वा इदं सर्वम्)प्रकृते गायत्रीति पदं न मंत्रात्मकगायत्रीपरकमपितु परमात्मकबोधकम् यथा सिंहो माणवक इत्यत्र प्रयुक्तः सिंहशब्दो न सिंहपरकः किन्तु शौर्या-दिगुणयुक्तमाणवकबोधकस्तथैव गायत्रीशब्दः परमात्मनि प्रयुज्यमानो ब्रह्मणि गायत्रीसादृश्यानुसंधानप्रयोजकः ततश्च गायत्रीति पदेन परमात्मैव कथ्यते । इदं परिदृश्यमानमपरिदृश्यमानं सर्वभूतं प्राणिजातं यत्किञ्चित्च-राचरात्मकं तत्सर्वं गायत्री एव रामाख्यं ब्रह्मैव । एतावता ब्रह्मणो भूतात्मकपादवत्त्वं प्रदर्शितम् । संप्रति गायत्रीपदशक्यतावच्छेदकरूपं

**वाग्वा इदं सर्वं भूतं गायति च त्रायते च ॥ १ ॥**

**या वै सा गायत्रीयं वाऽत्र सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥**

ब्रह्मणि प्रतिपादयन् प्रकारद्वयमाह (वाग्वै इत्यादि) गायत्री शब्दप्रतिपादितं गायत्रीसदृशः परमात्मैव वाक् वाग्रूपविशिष्टो भवति । 'शब्दरूपधरस्यैतद्रूपं विष्णोर्महात्मनः' इति पराशरवचनानुरोधेन ब्रह्मण एव शब्दरूपत्वात् । एतावता प्रकृते किमायातम् तत्राह (वाग्वा इदमित्यादि) इदं परिदृश्यमानं सर्वभूत प्राणिजातं चराचरात्मकम् वाग्रूपं ब्रह्मैव गायति शब्दायति । त्रायते च हिताहितप्राप्तिपरिहारप्रकारप्रतिपादनेन रक्षति च ततश्च वाग्रूपस्य ब्रह्मणः सर्वभूतगानत्राणकर्तृत्वधर्माभ्यां गायत्रीपदप्रतिपाद्यत्वम् । एवं वाग्लक्षणब्रह्मकर्तृकगानत्राणकर्मत्वधर्माभ्यां भूतात्मपादविशिष्टब्रह्मणो द्वैविध्यमपि कथितं भवतीति ॥ १ ॥

द्वितीयं रूपं गायत्र्यात्मकब्रह्मणो दर्शयितुमाह (या वै सा गायत्रीत्यादि) या वै खलु सर्वभूतलक्षणप्रथमपादविशिष्टा गायत्री गायत्रीपदबोध्यं ब्रह्म सा तदेव सर्वाधारतया प्रसिद्धा इयं पृथिवी यस्मात्कारणात् अस्यां पृथिव्याम् इदं परिदृश्यमानं सर्वं भूतं चराचरात्मकं प्रतिष्ठितम् आधेयतयावस्थितम्, यतः पृथिवी ब्रह्मात्मिका अत एव सर्वभूतानां प्रतिष्ठा आधारभूता । केवलायाः पृथिव्याः सर्वभूतधारणसामर्थ्याभावात् । एतां पृथिवीं सर्वभूतानि नातिशीयते नातिवर्तन्ते (कर्मवशगो हि जीवस्तेषां यतः पृथिव्याधारभूता तस्मादेव कारणात् सर्वभूतैरियं नियमेनाशक्यातिक्रमणा । पृथिवीमयब्रह्मांडे जीवः परिवर्तते न ततोऽन्यत्रभूतानां परिवर्तनमिति भावः । एतावता द्वितीयः पादो निरूपितः भूतप्रतिष्ठात्वकृतानतिवर्त्यत्वलक्षणप्रकारद्वयमपि प्रदर्शितमिति ॥ २ ॥

या वै सा पृथिवीयं वाव सा यदिदमस्मिन्पुरुषे शरीरमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥३॥

यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे हृदयमस्मिन्हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥४॥

अथ गायत्र्याख्यस्य ब्रह्मणस्तृतीयं पादमादर्शयितुमाह (या वै सेत्यादि) शरीरमित्यन्तम्। या वै सा सर्वभूतप्रतिष्ठात्वेन प्रसिद्धा पृथिवी पृथिव्यात्मकपादयुक्ता गायत्री तदाख्यब्रह्म सा शरीरं शरीराख्यपादविशिष्टमित्यर्थः। यदिदमस्मिन् पुरुषे। अत्र पुरुषपदं शरीरविशिष्टजीवपरकम्। पार्थिवत्वात् शरीरस्य। कथं शरीरस्य गायत्र्याख्यब्रह्मरूपत्वं तत्राह (अस्मिन्हीमे इत्यादि) अस्मिन्शरीरावच्छिन्ने जीवे इमे पंचसंख्यकाः प्राणाः प्राणापानादयः भूतपदवाच्याः प्रतिष्ठिता आश्रिताः पृथिवीवत् भूतपदवाच्यप्राणानामाधारभूतत्वात्। शरीरं गायत्राख्यब्रह्मलक्षणमेव। शरीरस्य ब्रह्मरूपत्वं प्राणप्रतिष्ठात्वतदनुवर्तित्वधर्माभ्यामुपपादयति (अस्मिन् इत्यादि) एतदेव शरीरं प्राणादयो नातिशीयते नातिवर्तन्ते, शरीरमतिक्रम्य न कुत्रचिदन्यत्र गच्छन्तीत्यर्थः ॥ ३ ॥

चतुर्थं पादं दर्शयितुमाह (यद्वै तदित्यादि) यद्वै तत्पुरुषे शरीरम् पुरुषपदप्रतिपाद्यशरीरविशिष्टजीवनिष्ठशरीरलक्षणपादविशिष्टम्। यत् गायत्रीपदबोध्यं ब्रह्म तदेव ब्रह्महृदयं हृदयशरीरकं हृदयलक्षणपादविशिष्टम् कथं हृदयं ब्रह्म तत्राह (अस्मिन्हीमे इत्यादि) अस्मिन्हृदयाख्यब्रह्मणि प्राणाः प्राणापानादय इन्द्रियाणि वा। तेषां प्राणादीनां हृदयसंबन्धिनाडीद्वारा हृदये प्रतिष्ठितत्वं भवति। एतदेव नातिशीयते यतः हृदयाश्रिताः प्राणादयस्तस्मादेव कारणात् प्राणादयो हृदयं नातिवर्तन्ते, हृदयमतिक्रम्य न भवन्ति। एवं प्रकारेण गायत्र्याख्यब्रह्मणश्चतुर्थो हृदयाख्यः पादः प्रदर्शितः

Scanned by CamScanner

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाऽभ्यनूक्तम् ॥५॥**

**तावानस्य महिमा ततो ज्यायांश्च पुरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥६॥**

**यद्वैतद्ब्रह्मेतदं वाव तद्योऽयं बहिर्द्धा पुरुषादाकाशो**

तथा प्राणप्रतिष्ठात्वप्राणानतिवर्त्यत्वलक्षणप्रकारद्वयमपि प्रदर्शित-मिति ॥ ४ ॥

अतः परं गायत्र्याख्यब्रह्मणश्चतुष्पादवत्त्वं षड्विधत्वं च निगमयन्नाह (सैषेत्यादि) सा एषा तदेतत् गायत्र्याख्यं ब्रह्म चतुष्पात् षड्विधो च षड्-विधं च भवतीति । नन्वेवं यदि तादृशं ब्रह्म चतुष्पादादिवत् तदा चतुष्पाद-वत्वेन परिच्छिन्नत्वं स्यात् गवादित्याशंक्य पूर्वोक्तस्य ब्रह्ममहिम्न एताव-त्वनिषेधिकामृचमुपदर्शयति तदेह चाभ्यनुक्तमिति तदेतत्गायत्र्याख्यं ब्रह्म लक्ष्यीकृत्य ऋचा मंत्रेण उक्तं कथितम् ॥५॥

तामेव ऋचं मंत्रं स्वरूपं दर्शयति तावानस्येत्यादि) अस्य गायत्र्या ब्रह्मणस्तावान् तावत्प्रमाणको महिमानियाम्यवर्गः ततः पूर्वप्रदर्शितमहि-मापेक्षया पुरुषो रामाख्यः परमात्मा ज्यायान् अधिकः तदपेक्षयापि अधि-कमहिमशाली । अस्य अस्य महिमशालिनः सर्वा भूतानि सर्वे कार्यजगदन्तः यतिअचित्संबद्धाश्चेतनाः पादोंऽशमात्रम् । अस्य परमात्मन दिवि अप्राकृते द्योतमाने स्थानविशेषे साकेते इत्यर्थः अमृतं त्रिपात् पादत्रयम् । दिवित्यत्र द्यु देपन समष्टिव्यष्टितत्वबहिर्भूतालौकिकस्थानविशेषस्य ग्रहणं भवति । तथा च भगवतो रामस्य पादेकेनेदं सर्वं चराचरात्मकं जगत् व्याप्तमपरं पादत्रयं तु अप्राकृते स्थानविशेषे इति । तस्मात्स परमात्मा समुक्तमहिमापेक्षयाप्यतिशये नज्जायानिति ॥६॥

अत्र भगवतश्चतुर्थपादतयोक्तं यत् हृदयं तस्य स्तुत्यर्थं हृदयाकाशस्य भूताकाशाभेदेन महत्वातिशयं दर्शयितुं भूताकाशस्य नित्यत्वव्यापकत्वाभ्यां

Scanned by CamScanner

**यो वै स बहिर्धा पुरुषादाकाशः ॥७॥**

**अयं वाव स योऽयमन्तः पुरुष आकाशो यो वै सोन्तः पुरुष आकाशः ॥८॥**

**अयं वाव स योऽयमन्तर्हृदय आकाशः यो वै सोऽन्त-**

परमात्मसादृश्यं सामानाधिकरण्येन दर्शयितुमाह (यद्वै तद्ब्रह्मेत्यादि) यद्वै तद्ब्रह्मेति इदं वाव तत् योऽयं बहिर्धा पुरुषादाकाशः पुरुषाद् बहिर्बाह्ये विद्यमान आकाश भूताकाशः योवै बहिर्धा पुरुषादाकाश स एवायमाकाशो यः खलु यः पुरुषाभ्यन्तरे विद्यमानः। अयमर्थः स्वकार्यव्याप्तत्वामूर्तत्वाचलत्वादिधर्मैर्ब्रह्मतुल्यो बाह्याकाशस्तदभिन्नः पुरुषपदप्रतिपाद्यशरीरमध्ये वर्तमान आकाशः। यद्यपि बाह्याभ्यन्तराकाशयोर्भेदस्तथापि धर्मिणऐक्याभिप्रायमादायाभेदव्यवहारः। एवंब्रह्मसदृश बाह्याकाशाभिन्नः शरीरान्तराकाशो यस्तदभिन्नः हृदयाकाशः। अर्थात् बाह्याकाशो ब्रह्मतुल्यः। बाह्याकाशाभिन्नश्च हृदयाकाश इति तस्य ब्रह्मतुल्यत्वात् यथा गायत्र्याख्यं ब्रह्म महामहिमशालि तथा हृदयाकाशोपि महामहिमशालीति। यथोक्तक्रमेण चतुष्पादयुतस्य षड्विधस्य ब्रह्मणः प्रपञ्चमध्यान्तर्गतत्वात् परिच्छिन्नत्वं च स्यादिमां शंकां व्यावर्तयितुं पूर्णत्वाचलत्वगुणकतया परमात्मोपासनं मोक्षफलमुपासकाय दास्यतीति दर्शयितुमाह (तदेतदित्यादि) तदेतत् गायत्र्याख्यं ब्रह्म पूर्णं सर्वगतमपरिच्छिन्नमित्यर्थः न तु हृदयमात्रपरिच्छिन्नम्। अप्रवर्ति अचलम् न कुतश्चित् क्वचित् प्रवर्तितुं शीलमस्य तादृशम् उच्छेदरहित इति यावत्। यथान्यानि भूतानि परिच्छिन्नानि नाशवन्ति च न तथा हृदयाकाशः परिच्छिनो विनाशी वेति। एतादृशब्रह्मोपासकस्य मोक्षफलं भवतीति तदेव दर्शयति (पूर्णामित्यादि) य उपासक एवं यथोक्तं ब्रह्म वेद विजानाति तदुपासनं करोति। स तदुपासनाबलात् पूर्णामनन्ताम् अप्रवर्तिनीं निश्चलामातिशयेन स्थिरां श्रियं लक्ष्मीमैश्वर्यलक्षणां लभते प्राप्नोति। तदुपासको मुक्ति-

हृदय आकाशः तदेत पूर्णमप्रवति पूर्णमप्रवर्त्तिनीं श्रियंलभते य एवं वेद ॥६॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

## अथ तृतीयाध्यायः त्रयोदशः खण्डः ।

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्य-मित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥१॥

मासादयति । यादृशगुणविशिष्टस्य ब्रह्मण उपासनं करोति तादृगेव फल-माप्नोति उपासकः ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

अनन्तरं पूर्वोक्तब्रह्मोपासनांगतया द्वारपालानामुपासनं विधातुमाह-(तस्य ह वा एतस्येत्यादि) यथेह लोके कश्चित् राज्ञो द्वारपालान् धनादि-वशीकृत्यानायासेन राज्ञः सकाशात् द्वारपालानुग्रहेण दुरूहमपि कार्यं साध-यति तद्वत् प्रकृते द्वारपालस्योपासनं विधाय तदनुगृहीतो विलक्षणं प्राप्स्य-तीति द्वारपालोपासनं प्रस्तौति । तस्य ब्रह्मणश्चतुर्थपादत्वेन विनिर्दिष्टस्य हृदयस्य एतस्य, पञ्च पञ्चसंख्यका देवसुषयः देवानां सुषयो देवसुषयः स्व-र्गलोकप्राप्तौ साधनलक्षणानि द्वारच्छिद्राणि देवैः प्राणादित्यादिभिः रक्ष्य-माणत्वात् देवसुषय इति कथ्यन्ते देवतायाः प्राणादित्यादि प्रभृतिकाया अधिष्ठानभूतानि पञ्चसंख्यानि द्वारछिद्राणीत्यर्थः । स यो अस्य प्राङ् सुषिः स प्राणः तदेव चक्षुः स एवादित्यः सूर्यः । तत्र द्वारपालस्य तेजोऽ-न्नाद्यतयोपासकस्य किं फलं भवतीति दर्शयितुमाह (तदेतदित्यादि) तदे

Scanned by CamScanner

अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रं स चंद्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान्यशस्वी भवति य एवं वेद ॥२॥

अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद् ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्यन्नादो भवति य एवं वेद ॥३॥

अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यः तदेतत्कीतिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥४॥

अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान्भवति य एवं वेद ॥५॥

ते वा एते पञ्चब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेदास्य

तत् प्राणाख्यं तेजोऽन्नाद्यमित्येवं रूपेणोपासीतो स्वर्गप्राप्तिफलाय तादृशद्वारपालमुपासीत । यः खलूपासकस्तेजोऽन्नादिरूपेण द्वारपालं वेदोपासीत स तेजस्वी भवति लावण्यवान्भवति तथा अन्नादो भवतीति ॥ १ ॥

अथ योऽस्य हृदयस्य दक्षिणः सुषिर्द्वारच्छिद्रं स व्यानस्तदाख्यो,वायुः तदेव तत्सम्बद्धमेव श्रोत्रम् तथा स एव चन्द्रमा तदेतत् व्यानाख्यं वायुविशेषं श्रीश्च विभूतिः यशः ख्यातिरिति कृत्वा उपासीत तदुपासनं ताभ्यां श्रीयशोभ्यां गुणाभ्यां कुर्यात् यश्चोपासकः श्रीयशोभ्यां तदुपासनं करोति स श्रीमान् संपत्तिमान् तथा यशा ख्यातिमान् भवतीति ॥ २ ॥

**कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान्स्वर्गस्य लोकस्य द्वारपान्वेद ॥६॥**

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु**

अथ योऽस्य प्रत्यङ् सुषिरित्यादि तत्र ब्रह्मवर्चस्वं शास्त्राध्यनजन्यं तेजः तद्वान् भवत्युपासकोऽप्यन्यत्सर्वं पूर्ववदेवावधेयम् ॥ ३ ॥

(अथ योऽस्योदङ् सुषिरित्यादि) यः खलु कीर्तिव्युष्टिगुणाभ्यामुपासते स कीर्तिमान् ख्यातिमान् भवति व्युष्टिमान् भवति तत्र व्युष्टिर्नाम देहसंबद्ध-कान्तिस्तद्वान् भवतीति ॥ ४ ॥

ओजस्वी महस्वान् भवति तत्रौजो बलं महत्त्वं महस्तद्वान् भवति ।५।

ते वा एते यथोक्तगुणविशिष्टा आदित्यचन्द्रमोवह्निपर्जन्याकाश-लक्षणदेवाः ब्रह्मपुरुषाः ब्रह्मसम्बन्धिनः पुरुषाः स्वर्गस्य लोकस्य भगव-ल्लोकस्य हृदयाकाशलक्षणस्य द्वारपाः द्वारपालकाः यद्वा भगवल्लोकस्या-तिवाहिकाः। सः यः खलु उपासक एतान् पंच ब्रह्मपुरुषान् स्वर्गस्य लोकस्य भगवल्लोकस्य द्वारपान् द्वारपालान् वेद तदुपासनं करोति । अस्योपासकस्य कुले वंशपरम्परायाम् वीरो जायते विद्यावीर्यादिना सम्पन्नः पुत्रः प्रादुर्भूतो भवतीत्यर्थः। प्रतिपद्यते प्राप्नोति स्वर्गं लोकं भगवल्लोकं द्वारपालस्योपास-नया तुष्टो द्वारपालो भगवल्लोकप्राप्तौ अप्रतिबन्धको भवतीति प्रतिबन्धक-रहितो भगवल्लोकमासादयतीति ॥ ६ ॥

गायत्रीविद्यायामागतस्य द्युसम्बन्धवतो निखिलफलदायकस्य परस्य ब्रह्मणो रामाख्यस्याभिमुख्यरूप्यकीर्तिमत्वादिलक्षणफलविशेषप्रयोज-नाय कौक्षेयज्योतिः स्वरूपत्वेनोपासनां विधातुमाह (अथ यदत इत्यादि) अथ यदतोऽमुष्मात् दिवो द्युलोकात् परः परज्योतिः सर्वदैव प्रकाशशीलं दीप्यते प्रकाशान्तरसम्बन्धं विनैव प्रकाशते ‘ तस्य भासा सर्वमिदं विभाति” इति श्रुतेः विश्वतः पृष्ठेषु । अत्र विश्वपदं व्यष्टिपरकम् । तथाक्षरात् सम्भ-

सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेष्विदं वाव तद्यदिदमस्मिन्न-
न्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः ॥७॥

यत्रैतदस्मिञ्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णाविपि गृह्य निनदमिव नदथुरिवाग्नेरिव ज्वलत उपशृणोति तदेतद् दृष्टञ्च श्रुतञ्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥८॥

वतीह विश्वमित्यत्र चराचरात्मकजगदन्तर्गतव्यष्टिजाते एव विश्वशब्दस्य प्रयोगदर्शनात् । सर्वतः पृष्ठेषु । अत्र सर्वशब्दः समष्टिपरकः तथा चातः परो दिवः अप्राकृतस्थानविशेषस्योपरिष्ठात् समष्टिव्यष्टिबहिर्भूतेष्वनुत्तमेषु अतिशयेनोत्तमेषु स्वापेक्षयोत्तमरहितेषु उत्तमेषु लोकेषु अतिशयेनोत्तमस्थानविशेषेषुतज्ज्योतिःज्योतिःशब्दशब्दित परमात्मादीप्यतेइत्यर्थः। अस्य कुक्षिस्थितज्योतिषि सम्पत्तिमाह(इदं वावेत्यादि) इदं कुक्षिस्थितं ज्योतिर्वाव तत् दिवः परस्तात् देदीप्यमानं त्रिपाद् ब्रह्म । यदिदमस्मिन् अन्तः पुरुषे शरीरमध्ये ज्योतिः। कौक्षेयज्योतिरेव कौक्षेयज्योतिः शरीरवमेव 'अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः । प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधमिति भगवदुक्तेः ततश्च त्रिपाद् ब्रह्मरूपतया कौक्षेयज्योतिषोऽनुसन्धानं कर्तव्यमिति भावः।अस्य परमात्मशरीरभूतस्य कौक्षेयज्योतिषदृष्टत्वश्रुतत्वगुणाभ्यामुपासनं विधातुं दृष्टश्रुतिलिङ्गावगम्यत्वं दर्शयति। (तस्यैषा दृष्टिरिति) तस्य परब्रह्मणः शरीररूपेणावास्थितस्य कौक्षेयज्योतिषो जाठराग्नेरेषा दृष्टिरिदं दर्शनम्। यत्र यस्मिन्कालेस्मिन्शरीरे हस्तसंस्पर्शेनोष्णिमानमुष्णस्पर्शमेतद्विज्ञातं यथा स्यात् तथा विजानाति सम्यगवगच्छति । समुपलभ्यमानस्योष्णस्य साक्षात् कौक्षेयवह्निसम्बन्धित्वात् तादृशस्पर्शप्रत्यक्ष एव परमात्मशरीरभूतजाठराग्नि, प्रत्यक्षरूप इति ( तस्यैषा श्रुतिरिति ) तस्य परमात्मनः शरीरभूतस्य जाठराग्नेरेषा श्रुतिः श्रवणोपायः

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
त्रयोदशः खण्डः ॥ १३ ॥

# अथ तृतीयाध्यायः चतुर्दशः खण्डः ।

## सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीताथ खलु

तत्र क उपायस्तत्राह (यत्रैतदित्यादि) यत्र यस्मिन् काले पुरुषः कर्णावपि गृह्यांगुलिभ्यां पिधायाच्छादितमिव कृत्वा निनदमिवरथादिशब्दवत् नदथु-रिव वृषभादिशब्दवदिव अग्नेरिव वह्नेर्ज्वलतः शब्दवदिव उपश्रृणोति उप समीपे स्वकीयान्तर्गतमेवैतत् शब्दश्रवणं यथा भवेत् तथा श्रृणोति शब्दसाक्षात्कारं करोति । एतादृशगुणविशिष्टस्याग्नेर्ध्यानं दर्शयति (तदे-तदित्यादि) तदेतत् परमात्मशरीरभूतं कौक्षेयज्योतिः दृष्टं च श्रुत चेत्युपा-सीत पूर्वोक्तक्रमेण दृष्टत्वश्रुतत्वगुणाभ्यां तदुपासनं कर्तव्यम् । तादृशोपास-नस्य फलमाह (चक्षुष्य इत्यादि) य उपासक एवं यथोक्तगुणकं कौक्षेय-ज्योतिर्वेद विजानाति तदुपासनं करोति स चक्षुष्यः चक्षुषा दर्शनीयो भवति श्रुतो विख्यातश्च भवति । द्विरुक्तिस्तु विद्यायामादरातिशयं दर्शयतीति ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
त्रयोदशः खण्डः ॥ १३ ॥

प्रतीकद्वारा जगत्कारणस्य परमात्मन उपासनं विधाय संप्रति सगुणस्य परमात्मन उपासनं विधातुं शांडिल्यविद्यामवतारयति (सर्वं खल्विद-मित्यादि) सर्वं परिदृश्यमानमाकाशादि चराचरात्मकमिदं जगत् ब्रह्म । ब्रह्मणः सकाशात् आकाशादिक्रमेण जातम् । कथं सर्वमेव परिदृश्यमानं ब्रह्मणः सकाशाज्जातं तत्राह (तज्जलानिति) तस्माद्ब्रह्मणः सकाशात् जगत् जायते सृष्टिकाले इति तज्जम् । पुनश्च प्रलयकाले सृष्टिव्यतिक्रमेण तस्मिन्नेव ब्रह्मणि सर्वं जगत् लीयते इति तल्लम् । स्थितिकाले तस्मिन्ने-व ब्रह्मणि अनिति अनप्राणने चेष्टते जीवति इति तदनं तज्जं च तल्लं च

**क्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥१॥**

**मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशा-**

तदनं चेति तज्जलान् । इति शब्दो हेत्वर्थकस्तथा च यस्मात् सर्वं ब्रह्मण एवोत्पन्नं ब्रह्मण्येव लीयते ब्रह्मण्येव जीवति तस्मात्कारणात् शान्तो राग-द्वेषरहितः सन् उपासीत सर्वात्मकस्य परमात्मन उपासनं कुर्यात्। अत्र तज्ज-त्व तल्लत्वं च स्थूलचिदचित्शरीरकपरमात्मनिष्ठं तदनत्वरूपं तन्नियामकत्वं तु न परमात्मगतं परमात्मनस्तदसम्भवात् किन्तु चिदचिन्मात्रगतम् । तस्मात् परमात्मन उपासन विधेयमिति उपासनपरकमिदं प्रकरणम् । संप्रति वि-हितस्योपासनस्यैव स्तुतिं दर्शयति (अथ खलु क्रतुमय इत्यादि) अथ यस्मात् कारणात् खलु निश्चयेन क्रतुमयः क्रतुप्रायोऽध्यवसायात्मकः पुरुषः भवति । तं यथा यथा उपासते तथैव भवति इति श्रुत्यन्तरात् । यं यं वापि स्मरन्-भावं त्यजन्त्यन्ते कलेवरम् । तं तमेवैति कौन्तेय सदा तद्भावभावितः" इति स्मृतेश्च । अस्मिन् इह जन्मनि यथा क्रतुः यादृशोपासनकोभवति पुरु-षो भवति । अर्थात् वर्तमानदेहे यथोपासनको भवति तथैव तेनैव प्रकारेण । इतोऽस्माद्वर्तमानदेहात् प्रेत्य मृत्वा मरणानन्तरं परलोकेऽपि भवति, तस्मात् कारणात् स उपासको रागद्वेषादिरहितो भूत्वा क्रतुमुपासनं कुर्वीत । यस्मात् कीटभ्रमरन्यायेन पुरुष उपासनप्रधानो भवति तस्माद् उपासनाया एव हिततमत्वादुपासनमेव सर्वथा कर्तव्यमिति । ॥ १ ॥

एवमुक्तप्रकारेण विहितं परमात्मोपासनं मनोमयत्वादि गुणान्तरविधा-नाय श्रुतिर्दर्शयति । (मनोमय इत्यादि) मनोमयः मनुते इति मनोऽन्त कर-णम् तन्मयस्तत्प्रधानः विशुद्धमनोमात्रग्राह्यः विवेकादिसाधनसप्तकेनानुगृ-हीतः परमात्मन उपासनया सर्वथा विशुद्धं यन्मनस्तावन्मात्रेण ग्राह्यप्राण-शरीरः चराचरात्मके विश्वे सर्वेषां प्राणादीनां क्रियाशक्तिविशिष्टानाधार-कः प्राणो यस्य शरीरम् आधेयं विधेयं शेषभूतं च स प्राणशरीरः आधे-

Scanned by CamScanner

**त्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तो-वाक्यनादरः ॥२॥**

यत्वविधेयत्वशेषत्वानामेव शरीरपदप्रवृत्तिनिमित्तत्वात् । भारूपोऽतिशयेन स्वच्छरूप । "आदित्यवर्णं तमसः परस्तात्" "तस्य भासा सर्वमिदं विभाति" "चैतन्येनैव ज्योतिषा, पश्यते रुक्मवर्णम्" इत्यादि श्रुतिप्रतिपादिता प्राकृतलोकोत्तरासाधारणनिरतिशयकल्याणगुणातिविलक्षणप्रकाशात्मकशरीर-वानिति । सत्यसंकल्पोऽप्रतिहतसंकल्पवान् संकल्पकार्ययोर्मध्येऽन्तरायरहित आकाशात्मा आकाशवत् सूक्ष्मः स्वच्छश्च गगनवत् सर्वगतः यथा आकाशः स्वकीयं कार्यजातं सर्वं व्याप्नोति तद्वदयमपि सर्वस्यापि व्यापकः आकाश आत्मा स्वरूपं यस्य स तथा । सर्वकर्मा क्रियते इति कर्म कार्यम् सर्वं जगत् चराचरात्मकं कार्यं यस्य स सर्वकर्मा । अथवा सर्वापि क्रिया यस्याराधनार्थं भवति स तथा । सर्वकामः काम्यन्ते अभिलाषा विषयीक्रियन्ते इति कामाः भोग्यभोगोपकरणादयः तेऽतिशयेन विशुद्धाः सन्ति यस्य स सर्वकामः। सर्वगन्धः सर्वे पुण्या गन्धाः सन्ति यस्य स सर्वगन्धः। अशब्दमस्पर्शमरूपमव्ययं तथा-रसं नित्यमगन्धवच्च यत् इत्यादि श्रुत्या प्राकृतरसगन्धादीनां परमात्मनि निषेधात् लोकोत्तराः स्वासाधारणा निरवद्या निरतिशयाश्च कल्याणलक्षणाः स्वभोग्यभूताः रसादयो विद्यन्ते यस्येत्यर्थः। एव सर्वरस इति पदमपि व्याख्येयम् । सर्वमिदमभ्यात्तः पूर्वोक्तं सर्वमिद मनोमयत्वादि सर्वरसान्तं कल्याण-गुणजातम् अभ्यात्तः आप्तवान् स्वीकृतवानित्यर्थः । परमात्मनो गन्धा-दिग्राहकत्वस्य कथनात् तदर्थं घ्राणादिकरणजातमपि कल्पित स्यादिति शंकामपनेतुमाह अवाकीः न विद्यते वाक् वागिन्द्रियं यस्य स अवाकी वागादीन्द्रियरहितः उपलक्षणमेतत्, इन्द्रियान्तरप्रतिषेधस्य "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । न तस्य वेद्यं न हि तस्य वेत्ता तमाहुरग्र्यं पुरुषं महान्तम्" इति श्रुत्यन्तरात् । अनादर इति न विद्यते ग्राह्यतया आदरः कुत्रापि यस्य स अनादरः अवाप्तसकलकामत्वेनादर्तव्य-वस्तुनोऽभावात् विषयाभावेनादररहित इति भावः ॥ २ ॥

Scanned by CamScanner

**एष म आत्माऽन्तर्हृदये अणीयान्व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः ॥३॥**

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्या-**

(एष मे आत्मेत्यादि) एषः पूर्वोक्तालौकिकसकलगुणविशिष्ट आत्मा परमात्मा । मे ममान्तर्हृदये पुण्डरीकमध्ये व्रीहेर्वा व्रीहिनामकान्नापेक्षया यवसर्षपाद्योषध्यपेक्षयापि अणीयान् अतिशयेनाणुः अतिसूक्ष्मतयाऽव-स्थानात् इन्द्रियादिना द्रष्टुमतीवायोग्य इत्यर्थः । एतादृशः परमात्मा उपा सनार्थं मम हृदयेऽवास्थित इति भावः । हृदयमध्येऽवस्थितस्योपास्यमानस्य-परमात्मनः प्राप्याकारमुपासनायोग्यं दर्शयति एष मे आत्मान्तर्हृदये ज्याया-नित्यादि मे ममान्तर्हृदये हृदये मे वर्तमानः पृथिव्यादिगगनान्तमहाभूतेभ्यो-पि ज्यायान् अतिशयेन महान् । पृथिव्यादिभ्योऽपि परमहत्परिमाणवान् हृदयमध्ये वर्तमानः स्वस्वरूपेण निरतिशयपरिमाणवानित्यर्थः ॥ ३ ॥

(सर्वकर्मेत्यादि आरभ्यानादर इत्येतत्पर्यन्तो भागः पूर्ववदेव व्याख्येयः पूर्वोक्तगुणविशिष्टतयैव परमेश्वरोऽन्तर्हृदये उपास्यो न तु तद्गुणो-पलक्षिततयेति दर्शयितुं पुनर्वचनमिति । एतादृशगुणविशिष्टः परमात्मा अस्मदादिहृदये सन्निहित इत्येवमनुसन्धातव्य इत्याशयेनाह "एष मे आत्मा-न्तर्हृदये एतद् ब्रह्मेति । पूर्वोक्तमनोमयत्वादिगुणकस्य परमात्मन उपासनमन्तिमोच्छ्वासपर्यन्तं क्रियमाणं सदेवे फलहेतुर्भवतीत्याशयेनाह (एवमितः प्रेत्येत्यादि) एतं मनोमयत्वादिगुणमुपास्यं परमात्मानमेव इतः प्रेत्य इतोऽस्मात् उपासकशरीरात् प्रेत्य मृत्वा मरणानन्तरम् अभिसंभवितास्मि देशविशिष्टपरमात्मानमुपास्यमवश्यं प्राप्तास्मि इति एव प्रकारेण यस्य उपासकस्य श्रद्धा निश्चयः स्यात् न तु विचिकि-त्सास्ति । तत्र विचिकित्सा नाम संशयः तथाचोपास्यप्राप्ति

त्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्म तमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥४॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
चतुर्दशः खण्डः ॥ १४ ॥

## अथ तृतीयाध्यायः पंचदशः खण्डः ।

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य

विषये यस्योपासकस्य संशयादिर्नास्ति तद्दृशोपासकोऽवश्यमेवोपास्यपरमात्मनः कैङ्कर्यमासादयति । ततश्च कैङ्कर्यात्तोषितो भगवान् तस्मै यथोक्त फलमवश्यमेव प्रयच्छतीति शाण्डिल्यो ऋषिरुक्तविद्यासम्प्रदायप्रद्योतकः स्माह कथितवानिति द्विरुक्तिर्विद्यासमाप्तिं प्रद्योतयति ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
चतुर्दशः खण्डः ॥ १४ ॥

उपासकस्य कुले वीरः पुत्रो जायते इति पूर्वं कथितमिति पुत्रस्य दीर्घायुष्कसिद्ध्यर्थं त्रैलोक्यात्मककोशविज्ञानारमते ( अन्तरिक्षोदर इत्यादि ) अन्तरिक्षोदरः अन्तरिक्षमुदरं सुषिरं यस्य कोशस्य स अन्तरिक्षोदरः मध्यवर्तित्वादन्तरिक्षस्योदरत्वम् । अन्तरिक्षे उदरदृष्टिः कर्तव्येति भावः कोश इव कोशः कोशसादृश्यात् । तथा भूमिः पृथिवी बुध्नीभूतं यस्य स भूमिबुध्नः न जीर्यति न विनश्यति आभूतसंप्लवावस्थायित्वात् चिरकालावस्थायित्वादित्यर्थः । अस्य कोशस्य प्रसिद्धाः दिशः प्राच्यादिका एव स्रक्तयः कोणास्तथा अस्य कोशस्य द्यौरेवोत्तर ऊर्ध्वं बिलम् मुखम् । स एषः

Scanned by CamScanner

स्रक्‍यो द्यौरस्योत्तरं बिलं स एष कोशो वसुधानस्तस्मिन्विश्वमिदं श्रितम् ॥१॥

तस्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति सोऽहमेत मेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम् ॥२॥

त्रैलोक्यात्मकः कोशो वसुधानः। वसुः सर्वप्राणिजातस्य कर्मफललक्षणं वसु धीयते निधीयतेऽस्मिन्निति वसुधानः। कस्मात्कारणात् अयं कोशो वसुधानस्तत्राह ( तस्मिन्नित्यादि ) तस्मिन् कोशमध्ये इदं परिदृश्यमानं कर्मकर्तृ फलात्मकं विश्वं समस्तं श्रितं स्थितं तस्मादेव कारणादयं कोशो वसुधानः इति ॥ १ ॥

कोशकोणत्वेनोक्ताया दिश एवान्तरविभागं दर्शयति । (तस्य प्राचीत्यादिक् ) तस्य कोशस्य प्राचीदिक् पूर्वगतोदिग्विभागो जुहूर्नाम । जुह्वति अस्यां दिशि कर्मकारिण इति जुहूः । एवं खलूपासकश्चिन्तयेत् । तथा अस्य दक्षिणा दिक् सहमाना नाम । सहन्तेऽस्यां पापकर्मफलानि यमनगर्यां प्राणिन इति सहमानेति चिन्तयेत् । तथा प्रतीची दिक् राज्ञी राज्ञा वरुणेनाधिष्ठितत्वात् । तथा उदीची दिक् सुभूतानाम भूतिमद्भिः कुवेरादभिरधिष्ठितत्वात् । तासां प्राच्यादिदिशां वायुर्वत्सः वत्स इव वत्सोऽमृतभूतः वायोर्दिक्जन्मत्वात् इति चिन्तयेत् एतादृशोहासनस्य फलं दर्शयति । (स य एतमेवमित्यादि) स यः कश्चिदुपासक एवं यथोक्तं वायुं दिशां प्राच्यादीनां वत्सरूपं वेद विजानाति उपासनं करोति स उपासक न पुत्ररोदं रोदिति। तत्र पुत्ररोदं पुत्रमरणादि

Scanned by CamScanner

अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्येऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः प्रपद्येऽमुनाऽमुनाऽमुना ॥३॥

स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव तत्प्रापत्सि ॥४॥

अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं

निमित्तकं तज्जनितं रोदं रोदनं न रोदिति न करोति पुत्रनाशनिमित्तकरोदनं तद् गृहे न कदाचिदपि भवतीति । सोहं स एतदुपदेष्टा अहम् पुत्रजीवनार्थी एतमेवं वायुं दिशां वत्सं वेद दिक्पुत्रत्वेन वायोरुपासनं कृतवानिति मा पुत्ररोदम् रुदं पुत्ररोदनाभावात्मकं फलं प्राप्तवानस्मीति॥२॥

अतः परं कोशविज्ञानस्यांगलक्षणान् प्रपदनादिमंत्रपंचकान् दर्शयितुमाह (अरिष्टमित्यादि) अरिष्टं विनाशरहितं चिरस्थेमानमिति यावत् कोशं यथोक्तम् अहं प्रपद्ये प्रपन्नोऽस्मि । अमुनाऽमुनेति त्रिवारं पुत्रस्य नाम गृह्णाति । अमुनाऽनेनामुकशर्मणा पुत्रनाम्ना निमित्तभूतेन तदीयदीर्घायुष्ट्व निमित्तीकृत्येर्थः अमुना पुत्रेण हेतुना विनाशरहितं कोशं प्रपद्ये । एव सर्वत्रापि (अमुनामुनेति अभ्यासो जपार्थकः) । अमुनाऽमुनामुनानेनाऽमुकशर्मणा पुत्रेण निमित्तभूतेन प्राणं प्रपद्ये प्रपन्नोस्मि ॥३॥

( प्राणं प्रपद्ये इत्यादि) द्वितीयादिमंत्राणां प्रतीकग्रहणपूर्वकं स्वयमेवाभिप्रेतार्थं कथयति ( स यदवोचमित्यादि ) सोहं मंत्रात्मना यदवोचं यदुक्तवान् प्राणं प्रपद्ये इति तेन वचनेन प्राणो वै प्राण एवेदं सर्वं भूतं प्राणिजातं यदिदं किंच तमेव सर्वतादात्म्यापन्नं प्राणं तत्त्वेन प्राणप्रतिपादनेन प्रापत्सि प्रतिपन्नोऽभूवम् इति ॥४॥

(अथ यदवोचं भूः प्रपद्ये इति) तत्र भूः प्रपद्ये इत्यस्य त्रीन् लोकान्

प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम् ॥५॥

अथ यदवोचम् भुवः प्रपद्य इत्यग्नि प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् ॥६॥

अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येवं तदवोचं तदवोचम् ॥७॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य
पञ्चदशः खण्डः ॥ १५ ॥

## अथ तृतीयाध्यायस्य षोडशः खण्डः।

पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातः–

प्रपद्ये इत्यर्थः। अंतरिक्ष प्रपद्ये दिवं प्रपद्ये इत्येव तदवोचमिति। अथ यदवोचमुक्तवानस्मि भुवः प्रपद्ये इति तेन वचनेनाग्नि वह्नि प्रपद्ये वायुं प्रपद्ये, आदित्यं प्रपद्ये इत्येव तदवोचम् इति ॥५॥

अथ यदवोंच ममुक्तवानस्मि स्वः प्रद्येऽत तेन वचनेन ऋग्वेद प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्ये इत्येव तदवोचम् तदवोचमिति द्विवचनं विद्या समाप्तिद्योतकमिति ॥६।७॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
पञ्चदशः खण्डः ॥ १५ ॥

पुत्रस्यायुष्ककामनयोपासनं पूर्वं कथित तदर्थं मन्त्रजपोपि प्रदर्शितः सम्प्रत्यात्मनो दीर्घजीवनार्थमुपासनं जपं च दर्शयितुमाह (पुरुषो वा। वेत्यादि) दीर्घकालं जीवन्नेव पुरुषः पुत्रादिफलेन संयुक्तः संभवेत्। अल्प-जीवनवतां तादृशफलप्राप्त्यसम्भवात्। तस्माद् त्मानं यज्ञं सम्पादयति दीर्घजीवनप्राप्तये पुरुषः। तत्र पुरुषो दीर्घजीवनसहितो देहेन्द्रियादिमान्।

Scanned by CamScanner

सवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदं सर्वं वासयन्ति ॥१॥

(वाव इति) निपातोऽवधारणप्रयोजनकः स चैतादृशः पुरुष एव यज्ञः। कथं पुरुषो यज्ञ इत्याशङ्कायां पुरुषस्य यज्ञसादृश्यं दर्शयति (तस्येत्यादि) तस्य पुरुषाख्यस्य यज्ञस्य यानि आद्यानि चतुर्विंशतिवर्षाणि आयुषस्तत्प्रातः सवनम्। तत्र चतुर्विंशतिवर्षे प्रातः सवनदृष्टिः कर्त्तव्येत्यर्थः। तत्र कारणं दर्शयति चतुर्विंशत्यक्षरा गायत्री गायत्रीछन्दसि चतुर्विंशत्यक्षराणि समनुगतानि। गायत्रं गायत्रीछन्दस्कम् विधियज्ञस्य प्रातः सवनम्, प्रातःसवनस्य गायत्रीछन्दस्कत्वात् गायत्रीछन्दसश्च चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातःसवनदृष्टिर्युज्यते एवेतिभावः ( तदस्येत्यादि) अस्योक्तोपासकस्य पुरुषयज्ञस्य तत् प्रातः सवनम् वसवस्तदाख्यदेवाः अन्वायत्ताः स्वामित्वेनानुगताः सवनदेवतारूपेण स्वामिन यतः प्रसिद्धयज्ञे प्रातः-सवनस्य वसव एव देवता इति। विधियज्ञवत्प्राप्तानग्नीन् वसूंश्च निवर्तयति ( प्राणा वा वेत्यादि ) प्राणा वागादयो वायवश्च ते एते एव प्राणाः पुरुषयज्ञे वसुपदबोध्या भवन्ति न तु वसुपदवाच्या वसवोऽत्र परिगृहीता भवन्ति। प्राणानामेव वागादीनां वसुत्वे युक्तिमादरयति श्रुतिः (एते हीदमित्यादि) हि शब्दो हेत्वर्थकः यस्मात् कारणात् एते वागादिकाः प्राणा इदं पुरुषादि प्राणिजातमस्मिन् शरीरे वासयन्ति स्थापयन्ति अस्मिन्देहे प्राणादिषु वसत्स्वेव सर्वमिदं प्राणिजातं वसति नान्यथा। तथा शरीराणामशैथिल्यलक्षणवासस्य प्राणाधीनत्वात् तस्मात् वसनात् वासनाच्च प्राणा एव वसवो न तु विधियज्ञीया वसवोऽत्र वसवः ॥१॥

तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात्प्राणा वसव इदं मे प्रातः सवनं माध्यन्दिनं सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति ॥२॥

अथ यानि चतुश्चत्वारिंशद्वर्षाणि तत्माध्यन्दिनं सवनं

तं यज्ञसम्पादकं पुरुषविद्यानिष्ठमुपासकं चेत् कदाचित् कस्मिश्चित्काले इत्यर्थः। एतस्मिन्प्रातःसवनसम्पन्ने वयसि चतुर्विंशतिवर्षात्मकेऽवस्थाविशेषलक्षणे किंचित् कफवातपित्तादि वैगुण्यजनित मरणादिशंकाहेतुभूतं रोगादिकम् उपपतेत् दुःखमप्रीतिलक्षणं समुत्पादयेत यदि तदा स यज्ञसम्पादक उपासकः पुरुष आत्मानं यज्ञं मन्वान इमं वक्ष्यमाणलक्षणं मत्रं ब्रूयात् जपेत् । मन्त्रस्य रूपमेव दर्शयति (प्राणा वसव इत्यादि) हे प्राणा वसवः। मे मम यज्ञरूपस्य संप्रति प्रातः सवन प्रवर्तते । इदं प्रवर्तमानं प्रातःसवनं माध्यन्दिन सवनमनुसन्तनुत माध्यदिनेन सवनेनायुषा सहित मेकीभूतं कुरुत । माध्यन्दिनसवनेनाविच्छिन्नं कुरुतेत्यर्थः । अहं यज्ञरूप उपासकः तत्र भवतां प्राणानां वसूनां प्रातःसवनेशानां मध्ये तेषु पश्यत्सूमाविलोप्सीय विच्छिन्नो लुप्तो मा भूवम्। इति शब्दोऽत्र मन्त्रपरिसमाप्तिवचनः । (उत् ह एव तत एति) स यज्ञरूपः पुरुष एताहशमन्त्रजपकरणात् तत उपतापात् मरणादिशंकाप्रयोजकात् उदेति उद्गच्छति उपतापादतिक्रान्तो भवति । उद्गेम्यविमुक्तः सन् अगदो व्याध्यादिरहितो भवति । मंत्रजपात् व्याध्यादिकमतिक्रम्य सर्वथा नीरुजो भवतीत्यर्थः ॥२॥

अथ यानि पुरुषयज्ञस्य चतुश्चत्वारिंशद्वर्षाणि तत् तानि माध्यन्दिनम् सवनं मध्यन्दिनप्रभवम् चतुश्चत्वारिंशद्वर्षात्मके आयुषो भागे माध्यन्दिन सवनदृष्टिः कर्तव्येति तत्र कारणं दर्शयति (चतुश्चत्वारिंशदित्यादि) यतः

**चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यन्दिनं सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्ति ॥३॥**

**तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत् स ब्रूयात्प्राणा रुद्रा इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुतेति माऽहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्य-**

त्रिष्टुप् चतुश्चत्वारिंशदक्षराः चतुश्चत्वारिंशदक्षरघटिता ततः त्रैष्टुभं त्रिष्टुप्छन्दस्कं माध्यन्दिनं सवनम् । तदस्य अस्योपासकस्य तत् माध्यन्दिनं सवनम् रुद्रा अन्वायत्ताः स्वामित्वेनानुगताः विधियज्ञे माध्यन्दिनसवनस्य रुद्रस्वामिकत्वात् । यो विधियज्ञप्रथितान् रुद्रान् व्यावर्तयति (प्राणा वा वेत्यादि) प्राणा वागादयो वायवश्च रुद्रा न तु विधियज्ञसम्बधिनः कथमेते प्राणा रुद्रास्तत्राह (एते हीदमित्यादि) एते वागादयः प्राणा इदं प्राणिजात रुदन्ति रोदयन्ति इति रुद्राः क्रूरा हि मध्यमे वयसि तस्मात् रुद्राः । युवावस्थायामिन्द्रियाणामतिशयेन विषयप्राबल्यजनकत्वेनैते पुरुषान् रोदयन्ति तस्मात्कारणादेतेषु रुद्रत्वमुपपद्यते इति भावः ॥३ ।

तं चेत्तमात्मानं यज्ञं मन्वानं यदि कदाचित् एतस्मिन् वयसि चतुर्विंशतिवर्षादनन्तरमष्टषष्टिवर्षमध्ये किंचित् रोगादिकमुपतपयेत् मरणादिशंकामुत्पादयेत् तदा स उपासकः प्रब्रूयात् वक्ष्यमाणं मंत्रमुपजपेत् । हे प्राणा रुद्रा यज्ञरूपस्य मे ममोपासकस्य इद प्रवर्तमान माध्यन्दिनं सवनम् । तृतीयसवनमनुसन्तनुत । तृतीयसवनेनाविच्छिन्नं कुरुतेत्यर्थः । इति शब्दो मन्त्रसमाप्तिसूचकः प्राणानां रुद्राणां माध्यन्दिनसवनेशानां मध्ये तेषु पश्यत्सु अहं यज्ञलक्षण पुरुषो मा विलोप्सीय लुप्तो मा भूवम् । उद्धैव तत उपतापात् रोगात् स उदेति उद्गच्छति अगदोह नीरुग्णो भवतीति मन्त्रजपकरणेन रुद्रप्रभावात् सर्वरोगविमुक्तः

Scanned by CamScanner

भद्रो ह भवति ॥४॥

अथ यान्यष्टाचत्वारिंशद्वर्षाणि तृतीयसवनं सवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनं तदस्याऽऽदित्या अन्वायत्ताः प्राणा वा वादित्या एते हीदं सर्वमाददते ॥५॥

तञ्चेदेतस्मिन्वयसि किञ्चिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसन्तनुतेति माऽहं प्राणा-

स्वस्थो भवतीत्यर्थः ॥४॥

(अथ यानि) उपासकस्याष्टाचत्वारिंशद्वर्षाणि तत् तदेव तृतीयसवनं तत्रावस्थाविशेषे तृतीयसवनदृष्टिः कर्तव्येति । तत्र कारणमाह अष्टाचत्वारिंशदक्षरा जगती तृतीयसवनस्य जगतीछन्दस्कत्वात् जगती हि अष्टाचत्वारिंशदक्षरघटिता । तस्माज्जागतं जगती छन्दस्क तृतीयं सवनम् । ( तदस्येत्यादि ) अस्योपासकस्य तत् तृतीयं सवनं आदित्या अन्वायत्ता आदित्याः स्वामित्वेनानुगताः विधियज्ञे तृतीयसवनस्यादित्यस्वामिकत्वादिति भावः । प्रसिद्धादित्यान् पुरुषयज्ञे व्यावर्तयति (प्राणा वा वेत्यादि) प्राणा वागादयो वायवश्चैवादित्या न तु विधियज्ञीयाः सर्वस्यापि विषयजातस्यादानात् प्राणानामादित्यत्वं भवतीति भावः। एते एव प्राणा इदं सर्वं विषयजातमाददते आहरन्तीत्यर्थः ॥ ५ ॥

(तं चेदित्यादि) तं पुरुषमुपासकं चेत् यदि कदाचित् एतस्मिन् वयसि अष्टषष्टिवर्षादनन्तरं षोडशाधिकशतवर्षमध्ये किंचिद् रोगादिकमुपतपेत् पीडयेत् तदा स उपासको ब्रूयादेतत् वक्ष्यमाणं मन्त्रं जपेत् प्रब्रूयादिति । हे प्राणा आदित्या वागादयः ! मे मम यज्ञरूपस्य सम्प्रति इदं प्रवर्तमान तृतीयं सवनम् । आयुरनुसन्तनुत तृतीयसवनलक्षणमायुः समाप्तिपर्यन्तमविच्छिन्नं कुरुतेति प्राणानामादित्यानां तृतीयसवनेशानां भवतां मध्ये-

नामादित्यानाम् मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥६॥

एतद्ध स्म वै तद्विद्वानाह महीदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्ष-शतमजीवत्प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥७॥

इतिछान्दोग्योपनिषदि तृतीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

यज्ञरूपोहं मा विलोप्सीय लुप्तो मा भूवम् । एतमंत्रजपकरणात् तत उपतापात् (स उदेति) उद्गच्छति अगदो रोगरहितश्च भवतीति ॥ ६ ॥

(एतद्धेत्यादि एतत् पुरुष यज्ञलक्षणं दर्शनं स्म वै किल विद्वान् महिदासो महिदासनामक ऐतरेयः इतरायाः अपत्यम् आह उक्तवान् किमुक्तवान् तत्राह (स किं मे इत्यादि) हे रोग सत्वं किं कस्मात्कारणात् एतत् एवं प्रकारेण मे माम् उपतपसि पीडां प्रयच्छसि । यस्मात्कारणात् पुरुषविद्यानिष्ठोहं-भवत्सम्पादितोपतापयेन न प्रेष्यामि न मरिष्यामि तस्मात्तव श्रमो निरर्थक एव । (इत्येवमाह महिदास इति) स ह महिदास एतद्विद्याप्रभावात् षोडशवर्षशतमजीवत् षोडशोत्तर वर्षशतं यावत् प्राणधारणमकुरुत । यः कश्चिदन्योप्युपासक एवं यथोक्तं यज्ञसम्पादन वेद विजानाति सोपि षोडशाधिकं वर्षशतं जीवतीति ॥ ७ ॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

# अथ तृतीयाध्यायस्य सप्तदशः खण्डः

स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥१॥

अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति ॥२॥

अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति ॥३॥

अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता

पुनरपि पुरुषस्य विधियज्ञसादृश्यमेव दर्शयति ( स यदित्यादि ) स उपासकः यत वस्तु अशिशिषति अशितुं भोक्तुमिच्छति अथ च यत् पिपासति पातुमिच्छति यन्न रमते इष्टाद्यप्राप्तिनिमित्तम् यदेवं जातीयकं दुःखमनुभवति ता अस्योपासकस्य दीक्षा अशनाया पिपासारत्यभावानां दुःखरूपत्वात् दीक्षात्वं कल्पनीयमिति दुःखसमानत्वाद्विधियज्ञस्य– वेति ॥ १ ॥

(अथ यत् अश्नाति) यत् पिबति यद्रमते रतिमनुभवति इष्टादि संयोगात् तदुपसदैः समानतामेति उपसदां च पयोव्रतनिमित्तकं सुखं विद्यते । अशनपानरतीनां पयोव्रतादियुक्तोपसद्वत् सुखरूपत्वेनोपसद्रूपत्वमितिभावः अशनपानरतिषु उपसद्दृष्टिः कर्तव्येत्यर्थः । ॥२॥

अथ यत् हसति यत् जक्षति भक्षयति यन्मैथुनं चरति तत् स्तुत शस्त्रैरेव समानतामेति प्राप्नोति शब्दवत्त्वसामान्यात् ॥३॥

अथ यत् तपोदानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणा तपः प्रभृतिषु दक्षिणादृष्टिः कर्तव्या धर्मपुष्टिकरत्वसामान्यात् ता

अस्य दक्षिणाः ॥४॥

तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्यावभृथः ॥५॥

तद्धैतद् घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवा ऽपिपास एव स बभूव । सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येत । अक्षितमस्यच्युतमसि प्राणसंशितमसीति । तत्रैते द्वे ऋचौ भवतः ॥६॥

आदित्प्रत्नस्य रेतसो उद्वयन्तमसस्परि ज्योतिः

यस्मात्कारणात् पुरुषो यज्ञः तस्मात् कारणात् तदा तस्य माता तं जनयिष्यति तदाऽन्ये लोका एवमाहुः सोष्यति इति तस्य मातरम्। यदा पुनः प्रसूता भवति तदा असोष्ट पूर्णिकेति विधियज्ञे असोष्ट सोमं देवदत्त इतिवत् असोष्ट माता पुरुषम् इत्युत्पत्तेः पश्चात् प्रयुंजते । पुनरुत्पादनमेवास्य तत्पुरुषाख्यस्य यज्ञस्य यत्सोष्यति असोष्टेति शब्दसम्बन्धित्वं विधियज्ञस्येव । किंच तन्मरणमेवास्य पुरुषयज्ञस्यावभृथः समाप्तिसामान्यात् इति ॥ ४।५ ॥

तदेतत् यज्ञदर्शनम् घोरो घोरनामक आंगिरसः अंगिरसगोत्रोत्पन्नः कश्चित् ऋषिः देवकीपुत्राय कृष्णाय शिष्यत्वेनोपनतायोक्त्वोवाच प्रोक्तवान् स च कृष्ण एतद्दर्शनं श्रुत्वा अपिपास एव स बभूव । विद्यान्तरेभ्यो निस्पृहो जातः । स एव यथोक्तयज्ञवित् पुरुषोऽन्तवेलायां मरणसमये एतन्मन्त्रयं प्रतिपद्येत जपेत् किं तत् मंत्रत्रयं तत्राह (अक्षितमसीत्यादि) उक्तविद्यानिष्ठः पुरुषोमरणकाले एतन्मंत्रत्रयं जपेत् अक्षितमसि । अक्षितं क्षयरहितमसि । अच्युतमसि स्वरूपस्वभावप्रच्युतिशून्यमसि प्राणसंशितमसि जगत् प्राणयितृत्वे सति संशिते सूक्ष्मतत्त्वमसीति । तत्रैतस्मिन्नर्थे विद्यास्तावके द्वे ऋचौ मन्त्रौ भवतः आदित् प्रत्नस्य रेतसः प्रानस्य पुरातन-

पश्यन्त उत्तरं स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्मज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥७॥

इति छान्दोग्योपनिषदि तृतीयाध्यायस्य

सप्तदशः खण्डः ॥ १७ ॥

## अथ तृतीयाध्यायस्याष्टादशः खण्डः

A मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म

स्य रेतसो जगत्बीजभूतस्याव्यक्तस्य आदित् आदिभूत कारणरूपम् उद्द्वयं तमसः यदितमसः प्रकृतेः परि परस्तात् ज्योतिः प्रकाशलक्षणम् उत्तरमुत्तममृज्योतिः पश्यन्तो वयमुद्गन्मेति व्यवहितेन सम्बन्ध तथा स्वः भगवल्लोकं पश्यन्तः उत्तरम् सर्वलोकोर्ध्वम् । देवं द्योतमानम् । देवत्रादेवेषु उत्तमम् अर्चिरादिपर्वभूतम् सूर्यरूपं ज्योतिः वयम उदगन्म उद्गत्य प्राप्ता स्मः ज्योतिरुत्तममिति द्विरभ्यासो यज्ञकल्पनासमाप्तिपरकः । ॥ ६।७ ॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यस्य

सप्तदशः खण्डः ॥ १७ ॥

पूर्वं मनोमयः साकेताधिपतिः परमात्मा मनोमय आकाशात्मा चेति कथितः संप्रति मनसि आकाशे च परमात्मदृष्टिविधानार्थमयमारम्भः तत्राध्यात्मं मनसि अधिदैवतमाकाशे ब्रह्मदृष्टिरुपदेशार्थमाह (मनोब्रह्मेत्यादि) तत्र मनुते इतिमनोऽन्तःकरणम् तन्मनो ब्रह्म मनसि ब्रह्म इति कृत्वा उपासीतोपासनं कर्तव्यम् । इत्यध्यात्मम् । आत्मानं शरीरेन्द्रियं चाधिकृत्य प्रवर्तमानमुपासनमध्यात्ममिति । अथमनसो ब्रह्मरूपत्वकथनानन्तरम् अधिदैवतं देवताविषयकं दर्शनमुपासनमुपदिश्यते (आकाशो ब्रह्मेति) आकाशे ब्रह्मदृष्टिः कर्तव्येति यथा च ब्रह्म सर्वगत तथाआकाशस्यापि सर्व

A: मनः इति द्वितीयान्तम् इति छा० सू० ४।११४ इत्यस्य भाष्यार्थपति

४।११४

त्युभयमादिष्टं भवत्यध्यात्मं चाधिदैवतं च ॥ १ ॥

तदेतच्चतुष्पाद् ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममथाधिदैवतमग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतं च ॥२॥

गतत्वात् । एवं यथोक्त क्रमेणोभयमध्यात्ममधिदैवतं चोभयं ब्रह्मदृष्टिविषयकमुपासनमादिष्टमुपदिष्टं भवति अध्यात्मं चाधिदैवतं चेति ॥१॥

तदेतदित्यादि, तदेतत् मन आख्यं ब्रह्मचतुष्पात् चत्वारः पादा अवयवा विद्यन्ते अस्येति चतुष्पात् ननु मनोरूपस्य ब्रह्मणः कथं चतुष्पाद्वत्त्वं के ते वा चत्वारः पादास्तत्राह(वागित्यादि) वाक् पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः वाक् प्राणः चक्षुः श्रोत्रमित्येते पादा इव पादा इत्यध्यात्मं पादा मनोरूपस्य ब्रह्मणः । अथाधिदैवतमाकाशलक्षणस्य परमात्मनोग्निः पादो वायुः पाद आदित्यः सूर्यः पादो दिशः प्राच्यादिकाः पादः इति एवं प्रकारेणोभयमेव चतुष्पाद् ब्रह्मादिष्टमुपदिष्टं भवति अध्यात्मञ्चाधिदैवतं च । तत्र वाक् मन आख्यस्ये ब्रह्मणश्चतुर्थः पाद अन्यपादापेक्षया चतुर्थत्वं वाचः मनो हि वाचापादेन वक्तव्यविषयं घटादिकमभितिष्ठति । तस्मात्मनसः पाद इव वाणी भवति। एवं प्राणो घ्राणः पादः घ्राणेन गन्धात्मकविषयं प्रतिक्रामति मनः एवं चक्षुः प्राणः श्रोत्र पाद इत्येवं क्रमेणाध्यात्मं चतुः पादत्वं मनसः परमात्मनो भवतीति । अथाधिदैवतमग्नि वायु आदित्यदिश आकाशलक्षणपरमात्मन उदर इव गवादीनां पादा इव सलग्नाः समुपलभ्यन्ते । चत्वारो ह्यग्न्यादयो ब्रह्मरूपाकाशस्योदरसंलग्न पादा इव भवन्तीत्यर्थः तस्मात्कारणात् आकाशस्याग्निप्रमुखाः पादा इति कथ्यन्ते । एवं क्रमेणाध्यात्ममधिदैवतं चतुष्पादोपदिष्टं भवतीति ॥२॥

**वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥३॥**

**प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य**

( वागेव ब्रह्मण इत्यादि ) तत्र वागेव मनो लक्षणस्यब्रह्मणोध्यात्मं चतुर्थः पादः स वाग्रूपः पादः अधिदैवेतनाग्निवाह्निसवन्धिना ज्योतिषा प्रकाशेन भाति दीप्यते प्रकाशितो भवति तपति च सन्तापं करोति स्वकार्ये कर्तव्ये समुत्साही भवति "अग्निर्वाग्भूत्वा मुखं प्राविशदित्यादि" श्रुत्यन्तरेण वह्निदेवताया एव वाचोऽधिष्ठातृतया तदधीनप्रकाशप्रवृत्तिकत्वात्। सम्प्रति मनसो ब्रह्मण उपासकस्य किं फलं भवति तद्दर्शयति (भाति-च तपति चेत्यादि) य उपासक एवं यथोक्तं मनोलक्षणं ब्रह्म साकेताधिपतिं परमात्मानं वेद जानाति उपासनां करोति स उपासको यथोक्तोपासनाबलात् कीर्त्या यशसा ब्रह्मवर्चसेन भाति दीप्तो भवति तपति च स्वकार्ये समुत्साहयुक्तो भवति तत्र सुवर्णधनादीनां दानजनितं यशः कीर्तिः पराक्रमबलादिजनितं यशः अतः समानार्थकतया भासमानयोरपि कीर्तियशसोर्भेदः तथा ब्रह्मवर्चसं वृत्ताध्ययनसमृद्धिरिति ॥३॥

(प्राण एवेत्यादि) प्राण एव ब्रह्मणः मनोरूपस्य परमात्मनश्चतुर्थः पाद इतरपादत्रयापेक्षया प्राणस्य चतुर्थपादत्वम् । स प्राणो वायुना ज्योतिषा स प्राणोऽधिदैवतेन वायुसन्बन्धिना ज्योतिषा प्रकाशेन भाति दीप्यते तपति च। अन्यत्सर्वं पूर्ववत् । संप्रति विद्वत्फलं दर्शयति (भाति चेत्यादि) य उपासक एवं मनोरूपस्य ब्रह्मणश्चतुर्थपादत्वेन प्राणं विजानाति उपासते स कीर्त्यादानादिजनितया यशसा विक्रमादिजनितेन यशसा भाति च

Scanned by CamScanner

एवं वेद ॥४॥

चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥५॥

श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥६॥

इतिछान्दोग्योपनिषदि तृतीयाध्यायस्या

ष्टादशः खण्डः ॥ १८ ॥

दीप्यते तपति चेत्यादिकं पूर्ववदेवेति ॥४॥

चक्षुरेव ब्रह्मणो मनोरूपस्य चतुर्थः पाद इतरपादत्रयापेक्षया स चक्षुरात्मकः पाद आदित्येन ज्योतिषा आदित्यसम्बन्धिना प्रकाशेन भाति च दीप्यते तपति च। आदित्यस्य चक्षुरधिष्ठातृत्वात अयं भावः आदित्यप्रकाशेन प्रकाशितघटादिविषयग्रहणे चक्षुषः सामर्थ्यमन्वयव्यतिरेकाभ्यामन्यत्रावधारितम् तादृशचक्षूर्द्वारा मनोबाह्यविषयं रूपादिकमधितिष्ठतीति। तदन्यत्सर्वं पूर्ववदेवेति ॥५॥

श्रोत्रमेव मनोरूपस्य ब्रह्मणश्चतुर्थः पाद इतरपादत्रयापेक्षया स च श्रोत्रात्मकः पादो दिग्भिर्ज्योतिषा भाति च तपति च दिशः श्रोत्रं भूत्वा कर्णौ-विशन्निति श्रुत्यन्तेरण दिग्देवतानां श्रोत्राधिष्ठातृत्वात् तदन्यत्सर्वं पूर्ववदेव व्याख्येयम् ॥६॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य

अष्टादशः खण्डः ॥ १८ ॥

Scanned by CamScanner

# अथ तृतीयाध्यायस्यैकोनविंशः खण्डः

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् तत्सदासीत्तत्समभवत्तदाण्डं निरवर्तत तत्संवत्सरस्य**

ब्रह्मणः पादरूपेणादित्यस्य कथनं पूर्वं कृतम् अथ तस्मिन्नादित्ये सकल ब्रह्मदृष्टच्यर्थमिदं प्रकरणमारभ्यते (आदित्य इत्यादि) आदित्यः सकल प्रकाशाधिपतिब्रह्म इत्येवमादेश उपदेशः क्रियते इति क्रियपादाध्याहारः तस्यादित्याख्यब्रह्मण उपव्याख्यान क्रियते आदित्यस्य स्तुतये अत्र खलु-लोके सर्वोपि प्राणिनां व्यवहार आदित्यनमित्तक एवेति भवति आदित्यः स्तु-तिविषय इति (असदेवेत्यादि) इदं नामरूपाभ्यां व्याकृतं जगत् चराच-रात्कम् । अग्रे उत्पत्तेः पूर्वम् असत् अव्याकृतनामरूपमेवासीत् अभवत् । यथेदं कार्यरूपेणेदं जगत् दृश्यते न तथोत्पत्तेः प्रागासीत किन्तु अव्या-कृतनामरूपकंकारणकवलितमेवासीत् नैतावता उत्पत्तेः प्रागसत् आसीत् "कथमसतः सज्जायते" इत्यादि असत उत्तपत्तोरयोगात् । न हि असन् बन्ध्यापुत्रादि कदाचिदपि जायते संस्तु तैलादिः कारणव्यापारे-णाविर्भवति कार्याक्ष त्वादसद् व्यवहारो नत्वभावादिति । तत्सदासीत् यज्जगत्प्रागुत्पत्तेरव्याकृतनामरूपकमासीत् तदेव जगत्सदासीत् ईषन्ना-मरूपकार्याभिमुखमभवत् । तत्समभवत तज्जगत्समभवत अल्पनरनाम-रूपव्याकरणेन । अंकुरीभूतमिव बीजं क्रमशःस्थूलमभवत् । यथा न्यग्रोधा-दीनां वृक्षो बीजावस्थायां सर्वथा अपरिदृश्यमानो भवति पृथिवीजलोष्ण-वायुसंपर्कात् अंकुरभावमुपगच्छन् सूक्ष्मरूपेणपरिदृश्यते अंकुरात्मना तथैवेदं जगत अंकुरमिव परिदृश्यमानभवत् इति । (तदाण्डं निरवर्ततेति) तत्सूक्ष्म-रूपेण परिदृश्यमाने क्रमेणस्थूलीभवत् अण्डंनिरसमभवत् अण्डः संवृत्त इत्य-

**मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतञ्च सुवर्णञ्च अभवताम् ॥१॥**

**तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौर्यज्जरायु ते पर्वता यदुल्वं स मेघो नीहारो या धमनयस्ता नद्यो यद्वास्तेय मुदकं स समुद्रः ॥२॥**

र्थः आण्डमित्यत्र छान्दसो हि दीर्घः। तत्संवत्सरस्य मात्रामशयत। तत् क्रमेण स्थूलीभवत् जगदण्डं संवत्सरस्य कालस्य मात्रां परिणाममभिन्न-स्वरूपमेकरूपतयेत्यर्थः। अशयतस्थितमेवाभूत। यथा हंससारसादिपक्षि-जनितमण्डमुत्पत्तेरनन्तरं किञ्चित्कालं स्थितं भवति तथैवेदं जगदण्डमद्-भ्यो जातं यथोत्पन्नं तथैव किञ्चित्कालं स्थित बभूव। तदनन्तर तन्निर-भिद्यत। संवत्सरकालादनन्तर तदण्ड निरभिद्यत निर्भिन्नमभवत। यथा हंसादिपक्षिजनितमण्डं कालपरिपाकमपेक्ष्य द्विधाभवति तथैवेद जगदण्डं संवत्सरपर्यन्त तथैवस्थित्वा संवत्सरादनन्तरं द्विधाबभूवेत्यर्थः ते आण्ड-कपाले। अण्डकपाले रजतं च सुवर्णञ्चाभवताम्। तस्य निर्भिन्नस्याण्डस्य द्वे कपाले अभवतामेकंरजतमपरञ्च सुवर्णं चेत्यर्थः ॥१॥

(तद्यद्रजतमित्यादि तत् तयोः कपालयोः कपालयोर्मध्ये यत् रजतं रजतमयं कपालमासीत् सेयं पृथिवी पृथिव्युपलक्षितमधोऽण्डकपालमित्यर्थः। यत्सुवर्णं सा द्यौः अथ यत् सुवर्णं सुवर्णमयं कपालं साद्यौःद्युलोकोपलक्षित-मूर्ध्वं कपालमित्यर्थः। यत् जरायुगर्भपरिवेष्टनम्। अण्डस्य विभागसमये याः स्थूलगर्भपरिवेष्टनशिरास्ते पर्वता हिमाचलादयः त एव पर्वता अभ-न्नित्यर्थः अथ यदुल्बं सूक्ष्मं गर्भपरिवेष्टनम् तत्सहमेघैर्नीहारः अवश्यायोऽ-भवदित्यर्थः या धमनयः शिरास्ताः नद्यो जाताः धमनय एव नदीरूपेण ब-भूवुरित्यर्थः। यद्वास्तेयमुदकं स समुद्रः तत्र वस्तिमूत्रस्थानम् तत्र भवं जातं यत् जलं तत् वास्तेयमुदकं समुद्रः समुद्ररूपेणबभूवेति ॥२॥

Scanned by CamScanner

**अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन सर्वाणि च भूतानि सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनुतिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥३॥**

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्तेऽभ्याशो ह**

(अथ यत्तदजायतेत्यादि) अथाण्डकपालनिर्भेदानन्तरं तत् तस्मिन् अण्डे गर्भरूपं यदजायत समुत्पन्नोऽभूत् । स असौपरिदृश्यमान आदित्यः तत्रादित्यस्य समुत्पत्तिरभूदित्यर्थः । यथेह महिषादिपशूनां गर्भाद्वत्सो-जायते तथैवेहापि आदित्यलक्षणपुत्रः परमेश्वरस्य बभूवेति । तमादित्यं जायमानमनुपश्चात् घोषाः शब्दा उलूलव उरूरवा विस्तीर्णरवा महाध्व-नियुक्ता उदतिष्ठन् अभवन् उलूलव इति छान्दसं रूपम्। पक्ष्यादीनां विस्ती-र्णशब्दा अभवन्नित्यर्थः तथा सर्वाणि भूतानि स्थावरजङ्गमानि चाभवन् । सर्वे च कामाः मनुष्यादीनां काम्यमानाः स्रगादयो वनितादयश्चोपभोगयो-ग्याः पदार्थाः अप्यजायन्त यस्मात्कारणात् आदित्यस्योद्गमानन्तरमेव घोषादयः समुत्पद्यन्त तस्मात्कारणात् तस्यादित्यस्योदयेप्रति उदयादनन्तरम् प्रत्यायनमस्तमयं प्रतिसूर्यस्योदयास्तमयसमये उरूरवाःशब्दाः सर्वाणिभूतानि सर्वे च काम्यमानाः पदार्थाः समुत्पद्यन्ते सूर्यस्योदयास्त-मयसमये पक्षिशब्दादीनां दर्शनादित्यर्थः ॥३॥

(स य एतमित्यादि) स यः कश्चिदुपासक एतमेनं यथोक्तगुणकमादि-त्यं विद्वान् जानन् आदित्यं ब्रह्मोपास्ते आदित्यप्रतीकब्रह्मण उपासनं कुरुते स आदित्यभावमाप्नोति । नकेवलमेतदेवफलमुपासकस्य भवति अपितु दृष्टमपि फलं भवति तद्दर्शयति (अभ्याशो हेत्यादि) ह शब्दः प्रसिद्धार्थकः अभ्याशोझटिति । एवमादिब्रह्मोपासकम् साधवः समीचीनाः श्रुतिकटुत्वा-दिदोषरहिताः साध्वर्थवाचका घोषाः शब्दा आच गच्छेयुः तदीयश्रोत्रकुहरे समाविष्ट भवन्ति । नकेवलं तत् श्रोत्रसमवेताएवभवन्ति अपि तु उपचनि ओडन् सुखमुत्पादयन्ति। शोभनाः शब्दा उपासकस्य सुखजनका अपि भव-

यदेनं साधवो घोषा आ च गच्छेयुरुप च निम्रेडेरन्निम्रेडेरन् ॥४॥

इति छान्दोग्योपनिषदि द्वितीयाध्यस्य
एकोनविंशः खण्डः ॥ १९ ॥

इति छान्दोग्योपनिषदि तृतीयाध्यायः समाप्तः

न्तोति द्विर्वचनमध्यायसमाप्तिं सूचयतीति ॥४॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायस्य
एकोनविंशः खण्डः ॥ १९ ॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये तृतीयाध्यायः
समाप्तः ॥ ३ ॥

અમરીતિર્મહદાત્મા: પરબ્રહ્મ સનાતન: |
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિ:||

श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषिता

# छान्दोग्योपनिषद:

## चतुर्थाध्याये प्रथम: खण्ड:

ॐ॥ जानश्रुतिर्ह पौत्रायण: श्रद्धादेयो बहुदायी बहुपा-

तृतीयाध्याये प्रथमत ऐश्वर्यफलसंयुक्तभुक्तिफलवती आदित्यमधुविद्या-प्रदर्शिता। तदनन्तरमैहिकफलरहिता विशुद्धमुक्तिफलिका गायत्रीविद्या-प्रदर्शिता। तदनन्तरं तदनुबन्धि क्षुद्रफलककौक्षेयज्योतिर्विद्यापि समा-ख्याता। तदनन्तरं भारूपज्योतिर्विषयिणी मुक्तिफलवती शाण्डिल्यविद्या-कथिता। ततश्च प्राणतत्वभूतवायुविषयिणी वायुवत्सक कोशविद्या प्राणात्मकपुरुषाणामायुर्विषयिणी पुरुषविद्या आख्याता। वायु-प्राणरूपपादविशिष्टमनोब्रह्मदृष्टि: तथा तद्दृष्टयन्तर्गत प्रथमत: प्रा-च्नादित्यविषयकब्रह्मदृष्टिररि क्रमेण प्रतिपादिता तत्रोपसर्जनतया प्रद-र्शितयोर्वायुप्राणयोर्यत्र प्रधानतया ग्रहणं तादृशी वायुप्राणरूपसंवर्गवि-षयिणी पराविद्या रैक्वनामकब्राह्मणेन जानश्रुतये राज्ञे समुपदिष्टा। से-यं परविद्या चतुर्थाध्यायस्यारम्भे प्रस्तूयते।

सम्प्रति संवर्गविद्येह प्रस्तूयते आख्यायिकया विद्याया: स्तुति: प्रद-र्श्यते जानश्रुतिर्ह इत्यादिना। जानश्रुति: स्वकीयविद्यया बलादिशौर्येण लोकेश्रुति: कीर्तिर्यस्य स जनश्रुत: जनश्रुतस्यापत्यं पुमानिति जानश्रुति: एतन्नामक: कश्चिद्राजेत्यर्थ:। ह शब्द: प्रसिद्धार्थक: प्रसिद्धश्च तत्समये एतन्नामको हि राजा (पौत्रायण: पुत्रसंज्ञकस्य कस्यचित्पुत्र: प त्र: तस्या-

**ब्य आस स ह सर्वत आवसथान् मापयाञ्चक्रे सर्वत एव मेऽत्स्यन्तीति ॥१॥**

**अथ ह हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्यु-**

पत्य पौत्रायणः श्रद्धादेयः श्रद्धापूर्वकः याचकाय दातुंशीलं यस्य स श्रद्धादेयः श्रद्धापूर्वक दानस्यैव परलोकोपकारित्वात् श्रद्धाविरहस्य निन्दनाच्च "अश्रद्धया हुतं दत्तं तपस्तप्तमि" त्यादिस्मृतेः। बहुदायी बहु अनेकप्रकारकं गोभूमिसुवर्णं रजतविविधान्नं प्रभूतं ब्राह्मणेभ्यो दातुं शीलं यस्य स बहुदायी स्वभावत एष दानशीलो न तु फलविशेषं काल तीर्थादिविशेषं चासाद्यदानकर्तेतिभावः बहुपाक्यः = बहु अनेकप्रकारकमन्नं पायसं सघृदलमोदनं विविधं मिष्टान्नादिकं यस्य गृहे सर्वदैव पक्तव्यं यस्य स बहुपाक्यः यो हि यादृशमन्नं यदेच्छति तस्मै तादृशमेवान्नं दातव्यमितिकृत्वा स बहुपाक्य आसीदिति भावः। एतादृशगुणविशिष्टो यत्र कुत्रचित् प्रदेशविशेषे जानश्रुतिनामा राजा आस बभूव। स ह प्रसिद्धो जानश्रुतिः सर्वतः सर्वासु दिक्षु आवस्थात् एत्यातिथये वसन्ति यस्मिन् स आवसथो गृहम् धर्मशाला मित्यर्थः मापयाञ्चक्रे कारितवान्। कथं कारितवान् तत्राह (सर्वत एवेत्यादि) सर्वतः सर्वदिशातोऽतिथय एत्य समागत्य मदीयगृहे निर्वर्तितमन्नमोदनादिकम् अत्स्यन्ति भक्षयिष्यन्तीत्यभिप्रायेण। सर्वतः समागात्यतिथयो ममान्नं भक्षयिष्यन्तीत्यभिप्रायेण सर्वासु दिक्षु मार्गारण्यग्रामनगरादिषु अनाथश्रान्तपान्थानां शीतवातवर्षातपनिवारकान्नोदकशयनासनाच्छादनादिपरिपूर्णाः शालाः कारितवानिति भावः। ॥१॥

अथ कदाचित् निदाघसमये रात्रौ हर्म्यतले स राजा शयान आसीत्। अथ तदनन्तरं हंसाः केचन ऋषयो देवा वा राज्ञोऽन्नदाननिमित्तं यशः श्रुत्वाऽतीव प्रसन्नाः सन्तो राजानं द्रष्टुकामा हंसरूपमादाय निशायां रात्रौ

**वाद हो हो हि भल्लाक्ष भल्लाक्षजान श्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ॥२॥**

**तमु ह परः प्रत्युवाच कम्बर एनमेतत्सन्तं सयुग्वानमिव**

हर्म्यतले शयानं राजानमतिपेतुः समागताः यत्र राजा शयानो बभूव तद्दे-शावच्छिन्नगगने उड्डयन्तः सन्तो राज्ञो दर्शनगोचरे समागताः । (तद्धैव-मित्यादि) तत् तास्मिन्काले तेषां गच्छतां हंसानां मध्ये एको हंसः पृष्ठे गच्छन् अग्रे गच्छन्तं कञ्चन हंसम् अभ्युवादोवाच । पृष्ठगामी हंसः पुर-स्तात् गच्छन्तं हंसं किमवादीत् तत्राह(भोभो इत्यादि)भोभो अयि भल्लाक्ष भल्लाक्षः भद्राक्ष भद्राक्षः भल्लाक्ष भल्लाक्षेत्यनेन विपरीतलक्षणाया मन्द-लोचनेति संभ्रमेण द्विवार सम्बोधनम् । अर्थात् हेअ ग्रेगच्छन् हंस त्वम-न्धोसि । येनातितेजस्विनं राजानमुल्लंघ्य गच्छसि तत् किं न पश्यसि तमद्भुतं तेजोराशिरिवस्थितमिति । जानश्रुतेः पौत्रायणस्य दिवासमं द्युलोकेना स्वर्गेणातुल्ये अथवा दिवा दिवसेन समंतुल्यं ज्योतिस्तेजः आततं व्याप्तं प्रसृतम् । दिवासमस्य जानश्रुतितेजसः सर्वतोव्याप्तस्यापि ते दर्शनं नास्ति अस्तिवेति सावधानं करोति निवृत्यर्थम् । तन्मा प्रसांक्षीः ? तत् तस्मिन् जनश्रुतितेजसि प्रसक्तोमाभूः तज्ज्योतिषा सम्बन्धं माकार्षीरि-त्यर्थः प्रसक्तौ को दोषस्तत्राह-(तत्त्वेत्यादि) तत् व्याप्तं सर्वतं जानश्रुतो-स्तेजः त्वा त्वाम् अतिपातिनं मा प्रधाक्षीत् दहेत्यर्थः । एवं प्रकारेण पुरो-गामिनं हंसं परोहंसः प्रत्युवाचेति पूर्वेणान्वय इति । (तमु ह पर इत्यादि) तमेवं जानश्रुतेः प्रशंसात्मकं वचनमुक्तवन्तं पश्चाद्गामिनं हंसंप्रति परः पुरोगामी हंसः प्रत्युवाच प्रत्युक्तवान् । किमुवाच तत्राह (कंबर इत्यादि) कम् उ अरे । अत्र कमिति आत्थक्रियायाः कर्म । उ इति निपातोऽनर्थक-

रयिक्वमात्थेति यो नु कथं सयुग्वा रयिक्व इति ॥३॥

यथा कृताय विजितायाधरेयाः संयन्त्येवमेनं सर्वं तद-

भाय एव । अरे इति सम्बोधनम्। अरे पश्चाद्गामि हंस क सतं केनमाहात्म्येन गुणविशेषादिना युक्तं सन्तमेवं जानश्रुतिं प्रति सयुग्वानं शकटेन सहित रैक्वम् इव रैक्ववत् एतत्प्रशंसावचनमात्थ ब्रवीषि । रैक्व एव ब्रह्मज्ञानी स एव प्रशंसनीयः । अयं तु राजा न ब्रह्मज्ञानी तस्मात् तस्य किंतेजः कथं वा समां धक्ष्यति नहि ब्रह्मज्ञानरहितस्य तेजो भवति न वा कमपि दग्धुं शक्ष्यतीति भावः । एवं पुरोगामिना हंसेनोक्तः पश्चात्गामी हंसः पतन् पृच्छति (यो नु कथमित्यादि) यो नु कथं स युग्वा रैक्व इति । त्वया यो वर्णितो रैक्वः सः कः कीदृशः किंप्रभावश्चेति भावः ॥२।३॥

तत इतरो हंसः प्राह (यथा कृतायेत्यादि) यथा येन प्रकारेण लोके कृतायः कृतनामकों यः द्यूते प्रसिद्धः चतुरकायः तस्मिन् विजितम् अयो यस्य सः कृतायविजितः पुरुषः तदर्थमितरे अया त्रिद्व्येकाः काः अधरेय्यूना अयाः संयन्ति संगच्छते अन्तर्भूताभवन्ति चतुरंकेकृता ये एकद्वित्र्यंकानां विद्यमानत्वात् शते पंचाशदिति न्यायात् । ततः कृतांकविजितस्य एकाद्यंकविजयो भवत्येव । एवमेवलोके प्रजा यत् किंच यत् किंचित् साधु कुर्वन्ति शास्त्रप्रतिपादितस्वकर्मणोऽनुष्ठानं कुर्वन्ति तत्सर्वम् शोभनं कर्म । एवं कृतायस्थानापन्नं रैक्वमभिसमेति संगच्छते । अर्थात् रैक्वकर्मणि तदन्यस्य सर्वाणि शोभनानि कर्माणि अन्तर्भूतानि भवन्तीति । अपि च स रैक्वः यद्वेद विजानाति तदेवान्योपि यः कश्चित् वेद विजानाति रैक्वज्ञाने सर्वमेवज्ञानमन्तर्भूतमित्यर्थः स एतादृशगुणसम्पन्नो रैक्वः मया एतत् अधुना स युग्वानं रैक्व इति वाक्येनोक्तः कथित इति । अत्र कृताय इति पदमादाय किंचिच्चर्च्यते । तत्रायोनाम अक्षः अक्षस्यभागः पार्श्वमम

भिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति ॥४॥

यदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह सञ्जिहान

इति केचित् अयः शुभावहे दैवेगतौ द्यूताक्षपातने" इतिनिघण्टुदर्शनात् अयोऽक्षपातनमित्यन्ये। तत् द्यूतम् तत् द्विप्रकारकम् एकाक्षपातनलक्षणमनेकाक्षपातनलक्षणं च। तत्रांको नामाक्षपार्श्वेषु विन्दुरूपं चिन्हम्। यथैकत्र चत्वारोऽका अन्यत्र त्रय एवांकाः अपरत्र द्वावेकांकौ एकत्रैकएवांकः। ततश्च ताहशाक्षेण द्यूतं कुर्वत्सुबहुषु पुरुषेषु येन पुरुषेण पातितस्याक्षस्य चतुर्थांकयुक्तो भाग उत्तान उपरिदृष्टो भवति स कृताय विजयी भवति येन तु पातिताक्षस्य त्र्यंकादिलांछित भागाः उत्ताना भवन्ति स पराजितो भवतीति व्यवह्रियते इत्येकाक्ष पातन लक्षणं द्यूतम् यत्रानंकिताक्षपातनं तदनेकाक्षपातनलक्षण द्यूतम् यत्रानियतसंख्यकान् राशिभूतानक्षान् विकीर्य्य चतुष्कशो गणने क्रियमाणे यस्य दीव्यतोंतिममपि गणनम् चतुरक्षात्मकं भवति स कृतायेन विजयीभवति यस्यतु पुरुषस्य दीव्यतः त्र्यादिरूपतया तत् न्यूनं भवति तस्य पराजयो भवति। अन्येपि अनेकप्रकारका द्यूतभेदाः सन्ति ते यथा लोक ज्ञातव्या। अत्र द्यूतनिदर्शनम् रैक्वविद्यायां राज्ञो व्याकुलीभावप्रदर्शनार्थम्। यथा द्यूते पराजितो नरो व्याकुलितहृदयो भवति तथैव रैक्वविद्यायामयमपि व्याकुलहृदयोभविष्यतीति ॥४॥

(यदु ह जानश्रुतिरित्यादि) तत् स्वकीयनिन्दायुक्तरैक्वप्रशंसात्मकं हंसवाक्यं राजा जानश्रुतिः पौत्रायण उप शुश्राव श्रुतवान्। ततः स राजा कथं कथमपि रात्रिमतिवाह्य सन्जिहान एव शय्यांत्यजन्नेव क्षत्तारमन्तःपुररक्षकम् उवाच वक्ष्यमाणमुक्तवान्। तत्र क्षत्ता नाम राजान्त-

एव चत्तारमुवाचाङ्गारे ह सयुग्वानमिव रयिक्वमात्थेति यो नु कथं स युग्वा रयिक्व इति ॥५॥

यथा कृताय विजितायाधरेयाः सयन्त्येवमेनं सर्व तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति ॥६॥

स ह चत्ताऽन्विष्य नाविदमिति प्रत्येयाय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति ॥७॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं हा-

पुररक्षकः प्रतिलोमजातिविशेषः 'वैश्याद्ब्राह्मणकन्यायां क्षत्तानाम प्रजायते। जीविकावृत्तिरेतस्य राजान्तःपुररक्षण''मिति स्मृतेः। किमुक्तवान् राजा क्षत्तार तत्राह (अङ्गारे हेत्यादि) अरे अग हे अन्तःपुररक्षक। एवं प्रकारेण सम्बोधन कृत्वा रात्रौ यथा हंसयोः संवादो जातस्तत्सर्वं कथयित्वा रैक्वस्यचिह्नमुक्तवानिति अन्यत्सर्वं पूर्ववदेव व्याख्यातव्यम् ॥६॥

(स ह क्षत्तान्विष्येत्यादि) स ह क्षत्ता स चान्तःपुररक्षकः पुरुषविशेषः शकटादिलक्षणरैक्वऋषेश्चिह्नमनुस्मरन् ग्रामनगरादिलोकसंकुलस्थानविशेषे अन्विष्यान्वेषणं कृत्वा नाविदं नाहमज्ञासिषमिति राजानं प्रतिएयाय प्रत्यागतवानिति। त प्रत्यागत क्षत्तारं राजा प्रत्युवाच। हे क्षत्तः न हि एकान्तवासी ऋषिर्लोकसंकुलस्थानेषु समुपलब्धो भविष्यति किन्तु यत्र जनरहितनदीपुलिनारण्यादिषु ब्राह्मणस्यान्वेषणाय ब्राह्मणा वसन्ति तादृशविजनप्रदेशेषु गत्वा एनं रैक्वऋषिं प्राप्नुहि तादृशस्थानेषु गत्वा तदन्वेषणं कुरु इत्यर्थः ॥७॥

सः उक्तरूपेण राज्ञा समादिष्टः क्षत्ता पुनस्तादृशस्थानेषु गत्वा वि-

**न्वुवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥८॥**

**इति छान्दोग्योपषिदि चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥**

# अथ चतुर्थाध्याये द्वितीयः खण्डः

**तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्क-**

जने कस्मिंश्चिदधिष्ठाने शकटस्याधस्तात् शकटाधोदेशे पामानं कषमाणं चर्म-रोगविशेषं कण्डूयमानं रैक्वऋषिप्राप्य दृष्टवा च उपोपविवेश तत्समीपे विनय पूर्वकमुपविष्टवान् तदनन्तर तत्रोपविश्य त रैक्वऋषि प्रति अभ्युवा-दोक्तवान् । (त्वं नु भगवः स युग्वा रैक्व इति) हे भगवन् त्वमेव रैक्वऋषि-रसि स युग्वा इत्येवं क्रमेण पृष्टवान् । तदनन्तरं क्षत्तापृष्टो ऋषिः अहं ह्यराइति ह प्रतिजज्ञे । हे क्षत्तोऽहमेव स युग्वा रैक्व इत्येवं क्रमेण प्रो-क्तवानिति । (स ह क्षत्ता अविदमिति प्रत्येयाय । रैक्वस्य स्वीकारात्मकं वचनं श्रुत्वा मया ज्ञातो ऋषिरितिमन्वानः राजानं प्रत्यागत इति ॥८॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये
चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥

**रैक्वोमयादृष्टः स चामुकस्थाने** शकटस्याधस्तात् विद्यते इत्येवं इतमुखात् श्रुत्वा तत तत्र रैक्वसमीपगमनाय विद्याप्राप्त्यर्थं कृतनिश्चयो जानश्रुतिः पौत्रायणः "रिक्तपाणिर्न सम्पश्येत् राजानं देवतां गुरुमि"ति नीतिमनु-स्मरन् गवां षट् शतानि निष्कं कण्ठाभरणं सौवर्णं बहुमूल्यहारादिकमश्वतरी-रथमश्वतरीभ्यां युक्तं रथं चादाय गृहीत्वा प्रतिचक्रमे गतवान् । तं रैक्वं ह्यभ्युवाद तत्समीपं गत्वा प्रणामादिकं कृत्वोवाच । ननु नायं रैक्वो धना-र्थी येन धनमादाय गतवान् न वा विद्यादानस्यायं क्रमो यद्धनं शिष्येभ्यो नीत्वा ततो विद्या दातव्या । विद्याग्रहणाय आचार्यकुले स्थित्वा शुश्रूषैव

Scanned by CamScanner

मश्वतरीरथं तदादाय प्रतिचक्रमे तं हाभ्युवाद ॥१॥

रयिक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति ॥२॥

विद्याप्राप्तये भवति "यथा खनन् खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छती'ति स्मृतेरितिचेत्सत्यम् नहि राजसिंहासने समुपविष्टस्य ब्रह्मचर्यपूर्वकदीर्घकालपर्यन्तं गुरुकुले निवासः सम्भवति येन गुरुशुश्रूषया विद्याप्राप्तिः स्यात् । न वा केवलं शुश्रूषैव विद्याप्राप्तौ साधनम् तदन्यस्यापि तत्साधनस्य सत्वात् तदुक्तम् स्मृतौ "गुरु शुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यते ॥" तथा च यथा तृणारणिमणिस्थलीयवह्नि प्रत्येकैकस्य तृणादेः स्वातंत्र्येण कारणता न तु दण्डचक्रादिन्यायेन मिलितस्य तद्वत् प्रकृते विद्याप्राप्तौ शुश्रूषापि कारणं पुष्कलं धनमपि कारणं विद्यापि कारणम् । एवं च शुश्रूषा विद्यालक्षणकारणस्य राजनि अभावात् तृतीयं धनात्मककारणमादाय विद्याप्राप्तये रैक्वसमीपगमनं राज्ञो न विरुद्धम् । अत एवाल्पधनसहितस्य राज्ञः प्रथमावृत्तौ रैक्वस्योपालम्भवचनम् द्वितीया वृत्तौ पुष्कलधनयुक्तस्य विद्यां दास्यामीति स्वीकारवचनमपि संगच्छते । अन्यथा धनग्रहणात् रैक्वस्य धनलोभवत्त्वापत्तेः लोभादेर्ज्ञानपरिपन्थितया तदर्थं राज्ञो रैक्वसमीपगमनं निरर्थकं स्यात् ब्राह्मणस्य प्रतारकत्त्वापत्तेश्च । शूद्रेति सम्बोधनं रैक्वस्य विद्याग्रहणनियमानभिज्ञताप्रदर्शनार्थम् । किमुवाच राजा रैक्वं प्रति तत्राह (रैक्वेमानीत्यादि) हे रैक्व गवादिकं सर्वं त्वदर्थमानीतवानस्मि त्वमेतत्सर्वं गृहाण । हे भगवन् एतत्सर्वं गृहीत्वा कृपां विधाय यां देवतामुपास्से यस्या देवताया उपासनां करोषि तस्या एवदेवताया उपा-

**तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र तवैव सह गोभिरस्त्विति तदु ह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥३॥**

सनं ब्रूहि। अहमपि तदुपासनं त्वदुपदिष्टः करिष्यामीत्येवं राजा ऋषिं प्रार्थयामासेति भावः ॥२॥

तं राजानं जानश्रुतिं प्रति परो रैक्वऋषिः प्रत्युवाच स मुक्तवान्। तत्राह (अहहारेत्वेत्यादि) अत्र अहेति निपात आश्चर्यप्रदर्शनार्थः हरेत्वाः हारसहित इत्वा रथः अश्वतरीरथो गोभिः सह तवैवास्तु कलत्रादिपरिवाररहितस्य ग्रामगृहादिरहितस्य मे रथादिना नास्तिप्रयोजनम् अपि तु गृहासक्तस्य पुरुषस्यैव रथादिकं सप्रयोजनकं भवति तस्मात् गृहस्थस्य तवैवैतत्सर्वं शोभते न ममेति। रैक्वः प्राहेति पूर्वेणान्वयः। ननु जानश्रुतिः क्षत्रियस्तदा कथं तं प्रति शूद्रेति सम्बोधनमिति तत्रोच्यते। हंसवचनात् स्वस्य ब्रह्मविद्याराहित्यं रैक्वस्य ब्रह्मनिष्ठत्वं ज्ञात्वा राज्ञो मनसि महती विलक्षणा च चिन्ता समुत्पन्ना कथं मे ब्रह्मविद्याप्राप्ता स्यादिति ततो ब्रह्मविद्याप्राप्त्यर्थं रैक्वं प्रत्यागतवानिति राज्ञः शोकवेगं योगप्रभावाद् ऋषिरवेत्य शूद्रेति सम्बोधनं कृतवान् त्वं शोकाकुलोसीति ज्ञातवानहमिति स्वकीययोगमहिमानं ख्यापयन्। न तु जात्या शूद्र इति कृत्वा तथा सम्बोधनम् इति। अल्पं मया धनमानीतं नत्वधिकं विद्याग्रहणोपयोगि। अतो मां शूद्रपदेन सम्बोधयति निषेधं च करोति अतो मयाऽधिकमानेयमिति रैक्वाभिप्रायं ज्ञात्वा तदु ह पुनरेव जानश्रुती राजा पौत्रायणः गवां सहस्रं निष्कं प्रभूतं सुवर्णम् अश्वतरीरथं दुहितरं परिणयार्थं स्वकीयां कन्यां सर्वाङ्गशोभनाम् रैक्वस्य निवासार्थं तत्रत्यं ग्रामं चादाय गृहीत्वा प्रतिचक्रमे आनीतवान् ॥३॥

तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयं ग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥४॥

तस्य ह मुखमुपोद्गृह्णन्नुवाचाजहारेमाः शूद्रानेनैव मुखेनालापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥५॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य द्वितीयः खण्डः ॥२॥

एतत्सर्वमादाय तं रैक्वं हाभ्युवाद प्रोवाच हे रैक्व इदं गवां सहस्रमयं निष्कः सुवर्णाभरणम् अश्वतरीरथ इयं जाया इयं मदीया कन्या तां जायार्थम् । यथा यस्मिन् सम्प्रति निवासं करोषि अयं ग्रामः । एतत्सर्वं गृहीत्वा हे भगवो भववन् मा मां शाधि ब्रह्मविद्यां प्रब्रूहि प्रत्याख्यान मा कुरु एवं क्रमेण राजा रैक्वं प्रार्थयामासेति ॥४॥

(तस्याहेत्यादि) तस्य जानश्रुते राज्ञः मुखम् कन्याद्युपायनलक्षणमुपायं द्वारम् उपोद्गृह्णन् अंगीकुर्वन् रैक्व उवाचोक्तवान् किमुक्तवान् तामेवोक्तिं स्वीकारलक्षणमाह(आज हारे इत्यादि) हे शूद्र हे राजन् इमादक्षिण कन्यादिलक्षणा आजहार आजहर्थ अनेनैन मुखेनोपायेनोपायनलक्षणेन आलापयिष्यथा आलापयिष्यसे ब्रह्मविद्योपदेष्टारं मां करिष्यसि । अत्रापि शूद्रेति सम्बोधनं न वर्णविशेषाभिप्रायेण जात्या शूद्रस्य ब्रह्मविद्यायामनधिकारात् किन्तु पूर्ववदेव प्रयोजनम् । यत्र ग्रामविशेषे रैक्व उवास निवासम करोत् ते महावृषेषु देशविशेषे रैक्वपर्णा इति प्रसिद्धाः तान् ग्रामान् रैक्वाय ददावित्यर्थः तदनन्तरं तस्मै राज्ञे स रैक्वः उवाच स्वकीयोपास्यां देवताम् उवाचोपदिदेशेति ॥५॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य द्वितीयः खण्डः॥ २ ॥

# अथ चतुर्थाध्यायः त्रितीयः खण्डः

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥१॥

रैक्वो राजानमुपदिदेशेति द्वितीयखण्डान्ते कथितम् । तत्र कीदृशः स उपदेश इति जिज्ञासायां तदुपदेशमाह (वायुर्वावेत्यादि)। वायुर्वा सवर्गः तत्रेरणस्वभावो बाह्यो वायुरेव सवर्गः संवर्जनात् सवर्गो वायुः सवर्जनाख्य गुणसंबन्धात् संवर्गो वायुरेव । तत्र सवर्जनम् संग्रहणमेकीकृत्य ग्रहणमित्यर्थः ततश्च संवगगुणविशिष्टो वायुर्ध्यातिव्यस्तादृशगुणविशिष्टस्य वायोरुपासनं कर्तव्यमिति भावः । वायोः सवर्गत्वमेवोपादयति यदा वेत्यादिना। यदायस्मिन् काले अग्निः प्रसिद्धः सर्वदाहको वह्निः उद्वायति उद्वास प्राप्नोति विनाशप्रतियोगी भवति तदा वायुमेवाप्येति वायुस्वाभाव्यमेव प्राप्नोति । कार्यं खलु स्वकारणे एव विनाशकाले गच्छतीति वह्नेर्वायुजन्यत्वात् विनाशाकाले वह्निर्वायौ लीनो भवति एवं यदा यस्मिन् काले सूर्योऽस्तमेति दर्शकस्य चक्षुर्विषयतामतिक्रामति तदा स सूर्यो वायुमेवाप्येति वायुस्वाभाव्यमेव गच्छति । एवं यदा यस्मिन् काले चन्द्रोऽस्तमेति तदा वायुमेवाप्येति वायुस्वाभाव्यमेव गच्छति । ननु वह्निर्विनाशसमये स्वरूपं परित्यज्य कारणतादात्म्यमाप्नोति सूर्याचन्द्रमसौ तु स्वस्वरूपमपरित्यजन्तावेवोदेयास्तमयं प्राप्नुतस्तत्कथमुच्यते वायौ तयोः प्रलय इति चेत् सत्यम् । योयं सूर्योऽस्तमयकालेऽदर्शनभावमागच्छति तत्र वायोरेव कारणत्वम्, वायुनैव सूर्योऽस्त नीयते । चलनादिक्रियाया वायुकार्यत्वात् । यद्वा प्रलयसमये रविचन्द्रमसोः स्वरूपविनाशे तेजोरूपयोः सूर्याचन्द्र-

—योर्वायावेव प्रलयः स्यादिति ॥१॥

Scanned by CamScanner

**यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्स-र्वान्संवृङ्क्त इत्यधिदैवतम् ॥२॥**

**अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राण मेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो ह्येवैतान्सर्वान् संवृङ्क्त इति ॥३॥**

एवं यदा यस्मिन् काले आपो जलानि उच्छुष्यन्ति शोषभावमागच्छंति तदा वायुमेवाभियंति वायुभावमागच्छिन्ति । वायुरेव हि एतान् सर्वान् वन्ह्यादीन् संवृङ्क्ते स्वात्मभावमापादयति । तेजोलक्षणानामग्निसूर्यच-न्द्राणां जलस्य च लयकाले बाह्यवायौ एकीभावात् वायुः संवर्गः "प्रकृते च एनं सर्वं तदभिसमेती" त्यादि ब्रह्मविद्यायाः प्रशंसादर्शनात् वायुशब्देन वायुशरीरक परमात्मा श्रीराम एव विवक्षितः स च सर्वकारणत्वात्सर्व-मेकीकृत्य महाप्रलये गृह्णातीति । इत्यधिदैवतम् देवतासु सवर्गोपासनं कथितं भवतीति ॥२॥

यथा वायुः संवर्गस्तथा वायुविशेषोऽध्यात्मं प्राणोपि संवर्ग इत्याह-अथाध्यात्मम् आत्मानमधिकृत्य संवर्गदर्शनमिदं कथ्यते प्राणो वावसंवर्गः प्राणे संवर्गगुणकत्वमेवोपपादयति ( स यदेत्यादि ) सः पुरुषो यदा यस्मिन् काले स्वपिति स्वापं करोति तस्मिन् काले प्राणमेव वागप्येति यथा प्रलयकालेऽग्निर्वायुभाव प्राप्नोति तथा वागपि स्वापकाले प्राणभा-वमागच्छति प्राणे तल्लयो भवतीत्यर्थः । एवं प्राणं चक्षुरित्याद्यपि व्या-ख्येयम । प्राण एवैतान् वागादीन् सर्वान् संवृङ्क्ते । प्राणे वाक्चक्षुः श्रोत्रमनसामेकीभावात् प्राणं संवर्गमुपासीत । सवर्गगुणविशिष्टस्य प्राण-स्योपासनं विधेयमिति भावः । अत्रापि प्राणपदं प्राणशरीरकपरमात्म-बोध मेवेति ॥३॥

तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥४॥

अथ ह शौनकञ्च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः॥५॥

स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन्बहुधा

तौ वा एतौ वायुप्राणौ द्वावपि संवर्गौ संवर्जनादिगुणविशिष्टौ । तत्र देवेषु अधिदैवतं वायुरेव संवर्गः प्राणेषु वागादिषु प्राण एव संवर्गो मुख्यः संवरणादिगुणविशिष्ट इति ॥४॥

संप्रति संवर्गविद्यां स्तोतुमाख्यायिकेयं प्रस्तूयते ( अथ हेत्यादि ) तत्र ह शब्द ऐतिह्यार्थकः पुरा कदाचिदेवमभूदित्यर्थः शौनकं च शुकस्यापत्यम् कापेयं कपिगोत्रोत्पन्नं कमपि सवर्गविद्याविद्वांसम् ब्राह्मणम् तथा काक्षसेनिं कक्षसेनस्यापत्यम् नामनोऽभिप्रतारिणम् ब्राह्मणं च । तावेतौ द्वौ ब्राह्मणौ पाचकैः परिविष्यमाणौ मध्यान्हकालिकभोजनाय समुपविष्टौ ब्रह्मचारी संवर्गोपासकः कश्चित् ब्राह्मणवटुः विभिक्षे भिक्षितवान् भोजनार्थं याचितवान् इत्यर्थः तस्मै भिक्षार्थिने ब्रह्मचारिणे । उ ह न ददतुः शौनकाभिप्रतारिणौ । योयं भिक्षार्थमागतो ब्रह्मचारी संवर्गविद्यानिष्ठो दुरभिमानी यत् निषेधानन्तरं वक्ष्यति तदावां श्रोष्याव इति मन्वानौ तौ तस्मै भिक्षां न ददतुरिति भावः ॥५॥

सहोवाच । स भोजनमलभमानो ब्रह्मचारी वक्ष्यमाणवचनं प्रोवाच ( महात्मन् इत्यादि ) महात्मनोऽधिदैवतमग्निसूर्यचन्द्रजललक्षणान् अध्यात्मं वाक्चक्षुः श्रोत्रमनोरूपान् चतुरश्चतुःसंख्यकान् देवान् । भुवनस्य सर्वलोकस्य गोपा गोप्ता रक्षकः स एक एव देवो वायुप्राणलक्षणः कः प्रजापतिः जगार । संहरणं कृतवान् । सर्वं स्वात्मसात् करोतीत्यर्थः । हे

Scanned by CamScanner

**वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥६॥**

**तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिताप्रजानां हिरण्यदंष्ट्रोबभसोऽनसूरिर्महान्तमस्य**

कापेय ! हे अभिप्रतारिन् ! एवं भूतम् प्रजापतिम् बहुधाऽनेकरूपतयावसन्तं विद्यमानम् मर्त्या मरणधर्माणो मनुष्या अविद्यामोहिताः सन्तो नाभिपश्यन्ति न जानन्ति । यस्मै वा एतदन्नम् । एतत् परिदृश्यमानमग्न्यादिकं सर्वं जगत् यस्मै यस्य संवर्गस्य प्रजापतेरन्नमदनीयं तस्मै भिक्षमाणाय मह्यमेतदन्नं न दत्तम् । तस्मात् न केपि जानन्ति इति उपासनदार्ढ्योयोपास्योपासकयोरैकयबुध्या भिक्षमाणाय स्वस्मै यत् अप्रदानं तत् स्वकीयोपास्यप्रजापतेर्देवस्यैवाप्रदानमिति मन्वानो ब्रह्मचारी तौ कापेयाभिप्रतारिणौ निन्दितवानिति भावः ॥६॥

(तदुह शौनक इत्यादि) तत् तदनन्तरं ब्रह्मचारिणो निन्दावचनं श्रुत्वा शौनकः कापेयः प्रतिमन्वानः ब्रह्मचारिकथितं मनसा विचारयन् प्रत्येयाय तत्समीपं गतवान् । तत्समीपं गत्वा चोवाच आत्मा देवानामित्यादि देवानामग्न्यादीनामात्मा नियन्ता । तथा प्रजानां जायमानसर्ववस्तूनां जनिता समुत्पादकः हिरण्यदंष्ट्रः सुवर्णवत् देदीप्यमानदन्तयुक्तोऽबिनाशिदंष्ट्रायुक्तः बभसो भक्षणशीलः उत्पथगामिनां विनाशक इत्यर्थः अनसूरिः सूरिर्विद्वान् नसूरिरसूरिः असूरिर्न भवतीत्यनसूरिः सर्वविषयकज्ञानवान् । अस्य साकेताधिपतेः परमात्मनो महान्तमप्रमेयं महिमानं विभूतिमाहुः कथयन्ति । यत् स्वयं अन्यैरनद्यमानोऽनाश्यमान एव । अनन्नमत्तु मयोग्यं वागादिकम् अत्ति विनाशकाले सर्वमेव स्वात्मसात् करोति । एतादृशगुणयुक्तः साकेताधिपतिरेव संवर्गो न तु भवतोच्यमानः कोपि प्रजापतिः संवर्गः। तस्मात् कारणात् हे ब्रह्मचारिन् त्वदुक्तं प्रजापतिलक्षणं संवर्गं न वयमुपास्महे

महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेद-मुपास्महे दत्तास्मै भिक्षामिति ॥७॥

तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतं सैषा विराडन्नादी तयेदं

किन्तु इति वै इत्येव परमात्मानं साकेताधिपतिलक्षणं संवर्ग मेवोपास्महे। अतः त्वं यथावत् संवर्गस्वरूपं न जानासि। इत्येव क्रमेण ब्रह्मचारिणं प्रसि कथयित्वा अस्मै भिक्षमाणाय ब्रह्मचारिणे भिक्षां भोज्यद्रव्य दत्त प्रयच्छत इति क्रमेण परिचारकं सूदं प्रत्यूचतुस्ताविति। एतावता संवर्गविद्याया वायुप्राणशरीरकपरमात्मपदत्व प्रतिपादितं भवतीति ॥७॥

(तस्मा उ ह ददुरिति) ततः कापेयेनाज्ञप्ताः परिचारकास्तस्मै भिक्षमाणाय ब्रह्मचारिणे भिक्षां ददुर्दत्तवन्त इति। संवर्गविद्यास्तुत्यर्थं संवर्गसंबंधिपदार्थान् कृतायत्वेन विराट्त्वेनान्नत्वेनान्नादित्वेन च स्तोतुं प्रस्तौति ते एते पंचान्ये इत्यादि। अधिदैवतमग्निसूर्यचन्द्रजलक्षणाः पदार्थाः अपियन्तश्चत्वारः अपीयमानो वायुरेक इति मिलित्वा पंच। तथा अध्यात्मं वागादिका अपियन्तश्चतुः का अपीयमानश्च प्राण एक इति पंच। सर्वसंकलनया दशत्वसंख्यां प्राप्ताभवन्तः कृतायतां प्राप्नुवंति। कृतसंज्ञके तस्मिन् अये चतुरंकाय त्र्यंकाय द्व्यंकायैकांकायानामनुप्रविष्टतया दशांकत्वं भवति। एकस्य द्वयोस्त्रयाणां चतुर्णां च समावेशात् दशत्वसंख्यायाः संभवादित्यर्थः। तस्मात् कारणात् संवर्गविद्योपास्यं दशत्वसंख्यायुक्ततया कृताय रूपं सत् सर्वासु दशसु दिशासु विद्यमानं सर्वमन्नमेव भवति "दशाक्षरा विराट् अन्नं विराडि"ति श्रुत्यन्तरात्। सा एताविठ् अन्नादी दशत्वसंख्याश्रयत्वात् दशाक्षरा विराट् छन्दो भवति। अन्नमत्तीत्यन्नादीकृताख्ये अये दशसंख्याया भक्ष्यपदन्तभूतत्वात्

**सर्वं दृष्टं सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥८॥**

### इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य तृतीयः खण्डः ॥३॥

## अथ चतुर्थाध्यायस्य चतुर्थः खण्डः

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयाञ्चक्रे**

दशत्वसंख्याया विराट्त्वात् विराजश्चान्नत्वात् दशत्वसंख्यागर्भितकृतायस्थानीयस्य संवर्गविद्योपास्यस्य परमात्मनः पंचान्ये पंचान्ये इत्यादिना निर्दिष्टस्यान्नादित्वमपि भवतीति भावः । तयेदं सर्वं दृष्टमिति । तया समुपासितया विराजा इदं सर्वं दशदिक्षु विद्यमानं पदार्थजात दशत्वसंख्यासादृश्यात् दृष्ट समुपासितं भवतीति भावः । संवर्गविद्योपासकस्य फलमाह (सर्वमस्येत्यादि) अस्य संवर्गोपासकस्य इदं परिदृश्यमानं सर्वं वस्तु दृष्ट ज्ञात भवति सर्वज्ञतां प्राप्नोतीत्यर्थः । तथा अन्नादो भवति सर्वप्रकारकान्नस्य भक्षको भवति । य उपासक एवं पूर्वोक्तं संवर्गं वेद विजानाति तस्य पूर्वोक्तं फल भवति, य एवं वेद । द्विर्वचनं विद्यासमाप्ति सूचयतीति ॥८॥

### इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

"गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा । अथवा विद्यया विद्या चतुर्थी नोपपद्यते ।" इति स्मृतेः तृतीयखण्डे पुष्कलेन धनेन जानश्रुते राज्ञो विद्याप्राप्तिः कथिता । संप्रति 'यथा खनन् खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छती"ति स्मृतेर्महत्या शुश्रूषया विद्याप्राप्तिं दर्शयितुं षोडशकलब्रह्मविद्यां प्रस्तौति ( सत्यकामो हे

ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रोऽहमस्मीति ॥१॥

सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जबालो ब्रवीथा इति ॥२॥

स ह हारिद्रुमतं गौतममेत्योवाच ब्रह्मचर्यं भगवति

त्यादि ) सत्यकामो नामतो ह इति ऐतिह्यार्थकः जाबालो जबालायाः ऋषिपत्न्या अपत्यं जाबालः जबालां स्वकीयमातरम् आमन्त्रयांचक्रे पृष्टवान् किमिति पृष्टवान् तत्राह (ब्रह्मचर्यमित्यादि) भवति हे मातः स्वाध्यायग्रहणाय आचार्यकुले निवत्स्यामि निवासं कर्तुमिच्छामि किं गोत्रोहमस्मीति मम किं गोत्रं तत्कथयेत्येवं पृष्टवानिति ॥१॥

सा पुत्रेण यथोक्तप्रकारेण पृष्टा जबालाह एवं पुत्रं वक्ष्यमाणमुवाच प्रोक्तवती । हे तात पुत्र अहमेतद् भवत्पृष्ट गोत्र न वेद न विजानामि यद्गोत्रस्त्वमसीति । भवतः किं गोत्रं तदहं न जानामीत्यर्थः । अज्ञाने कारणमाह (बह्वहमित्यादि) बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे । साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रबीथा इति । हे पुत्र भवतः पितुराश्रमेऽनेके अभ्यागता आगच्छन्त आसन् तेषां परिचरणे व्यग्राहं भवत्पितुः सकाशात् नैव किमपि विज्ञातं गोत्रादिकमतो न जानामि गोत्रं त्वया आचार्यकुले गत्वा अहं सत्यकामो जबालापुत्र इति वक्तव्य इत्यैतावतैव ऋषिस्त्वां ज्ञास्यति नैवान्यत्प्रक्ष्यतीति भावः मूलाक्षरमतिरोहितर्थम् ॥२॥

(स ह हारिद्रुमतमित्यादि)। सः सत्यकामो मात्रा जबालयाऽनुमत आज्ञप्तश्च हारिद्रुमतं हरिद्रुमतोऽपत्यं गौतमं गोत्रतो गौतमीयम् एत्य प्राप्य तत्समीपं

Scanned by CamScanner

वत्स्याम्युपेयां भगवन्तमिति ॥३॥

तं होवाच किंगोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जाबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥४॥

तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां

गत्वेत्यर्थः उवाच प्रोक्तवान् भगवन् भगवति पूजनीये त्वयि ब्रह्मचर्यं स्वाध्यायग्रहणाय वत्स्यामि भवत्समीपे निवासं कर्तुमिच्छामि । अतो भगवन्तं पूजनीयम् उपेयाम् शिष्यत्वेनोपगच्छामि । कृपया मामुपनीय वेदं सरहस्यं सकल्पं साङ्गमध्येतुमित्यर्थः । शिष्यभावमामाद्याध्येतुं समागतं तं सत्यकामं ह प्रसिद्ध्यर्थकः उवाच प्रोक्तवान् गौतमः हे सोम्य किं गोत्रो नु असि भवतः किं गोत्रमिति । कथमेवमुक्तवान् यो हि ज्ञातकुलगोत्रः स एवोपनेतव्योऽन्यथा गोत्राद्यपृच्छने शूद्रस्यापि प्रवेशापत्तेः एवं गौतमेन पृष्टः सत्यकामः स उवाचोक्तवान् । भो गुरो एतत् गोत्रं नाहं वेद न विजानामि यद्गोत्रोहमस्मि । गोत्रज्ञानं मे नास्तीत्यर्थः । यदि न ज्ञायते तदा मातरं पितरं वा पृष्ट्वा आगन्तव्यम् तत्राह (अपृच्छं मातरम्) गोत्रविषये मातरं पृष्ट्वानहमित्यर्थः मातुः प्रतिवचनमनुवदति (सा मेत्यादि) । सा माता जबाला मां प्रति अब्रवीत् कथितवती । बह्वह चरंती इत्यारभ्य जाबालोऽस्मि भो इति मन्त्रपर्यन्तं व्याख्यातपूर्व एव ग्रन्थः ॥३।४॥

(तं होवाच) तं सत्यकामं गौतम उवाचोक्तवान् । अब्राह्मणो ब्राह्मणभिन्नस्त्रैवर्णिकेतरः एतत् एतादृशं सत्यविनयादियुक्तं वचनम् विवक्तुं विशेषेण वक्तुं नार्हति न प्रभवति । यद्यपि प्रकरणात् ब्राह्मणपदं ब्राह्मणस्यैव

चतःशता गा निराकृत्योवाच इमाः सोम्यानुव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रं संपेदुः ॥५॥

## इति छान्दोग्योपनिषदि चातुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

बोधकं तथापि त्रैवर्णिकानां वेदाध्ययनेऽधिकारात् ब्राह्मणपदं त्रैवर्णिकस्योपलक्षणम् अत्रैवर्णिकः शूद्रः शूद्र एतादृशमार्जवादिवचन वक्तुं नार्हति शूद्रस्य कुटिलस्वभावत्वात् विलक्षणमेतद् वचनं यत् गोत्ररहितस्याध्ययनेऽनधिकृतस्याध्ययनार्थिनो न भवतीति भावः। हे सोम्य सत्यकाम! समिधमुपनयनसंस्काराय समिधामाहरानय। त्वा त्वां उपनेष्ये भवत उपनयनसंस्कारं करिष्ये। ननु गोत्रनिर्णये कथमुपनयनं तत्र कारणमाह (न सत्यादगा) इति। सत्यं नातिक्रान्तवानसि सत्यमेवोक्तवानसि तस्मात् कारणात् त्वं ब्राह्मण एवेति मम निश्चयो जातोऽहं भवन्त प्रथममुपनीय वेदमध्यापयिष्यामीति भावः। (तमुपनीयेत्यादि) तं सत्यकामं गौतम उपनीयोपवीतसंस्कारं बिधाय कृशानां क्षीणानामबलानां दुर्बलानां गवां मध्यात् गोयूथात् अति दुर्बलानि चतुः शता गा गवां चत्वारि शतानि निराकृत्य पृथक्कृत्य वक्ष्यमाणं वचनमुवाच प्रोक्तवान्। किमुक्तवान् गौतमस्तत्राह (इमा इत्यादि) हे सोम्य प्रियदर्शन्! इमा गा चतुःशतसंख्यका गा अनुग व्रजानुगच्छ। एता गा नीत्वा वनं गच्छ तत्र गाः पालय चारय चेत्येवंक्रमेण गुरुराज्ञप्तवानिति भावः। तदनन्तरं स सत्यकामः सहस्रसंख्या यावद् गवां न भविष्यति तावत् पर्यन्तं वनात् नागमिष्यतीति प्रतिज्ञाय ता गा अभिप्रस्थापयन् नीयमान उवाच। स सत्यकामः ह वर्षगणं बहुकालं यावत् तृणजलादिपूरिताबाधितवने गाः पूर्वोक्ताः प्रवेश्योवासोषितवान्। यदा यस्मिन् काले ता गा सहस्रं सहस्रसंख्यकाः संपेदुः संपन्ना बभुवुस्तावन्तं वर्षगणं

# अथ चतुर्थाध्यायस्य पञ्चमः खण्डः ।

अथ हैनमृषभोऽभ्युवाद सत्यकाम३ इति । भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रं स्मः प्रापय न आचार्यकुलम् ॥१॥

ब्रह्मणश्च ते पादम् ब्रवाणीति । ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥२॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानि-
वने उषितवानिति ॥४॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
चतुर्थः खण्डः ॥ ४ ॥

अथ गोसहस्रसंख्यासंपत्यनन्तरम् श्रद्धया तपसा गवां रक्षणेन च प्रीता देवता तया अधिष्ठित ऋषभ एनं सत्यकामम् अभ्युवादोवाच । हे सत्यकाम। इति । संबोधने प्लुतिः । ऋषभस्य संबोधनानन्तरम् भगव इति प्रतिशुश्राव प्रत्युत्तरं दत्तवान् सत्यकामः । तदनन्तरं पुन ऋषभः प्राह हे सत्यकाम सोम्य वयं ऋषभाः सहस्र सहस्रसख्या देवतानुग्रहेण ऋषेरनुभावेन प्राप्ताः स्मः अर्थात् गवां सहस्रसंख्याः संपन्नाः अतो नः अस्मान् आचार्यगृहं प्रापय नय । तव तपःसाहसाभ्यां गवां सहस्रा संजाता तव प्रतिज्ञापि संपन्ना वयं त्वयि प्रसन्नाः स्मः तस्मात् गुरुकुलमस्मान् नयेति भावः तथा प्रीतश्चाहं ते तव ब्रह्मणः पादं ब्रवाणि कथयामि । एवं प्रकारेण श्रद्धातपोभ्यां प्रीत ऋषभवचनं श्रुत्वा सत्यकामो ब्रवीत मे भगवानिति वचनमुवाच । तदनन्तरं तस्मै सत्यकामाय ऋषभः किलोवाच ।

त्युपास्ते प्रकाशवानस्मिंल्लोके भवति प्रकाशवतो ह लोकाञ्ज-यति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥३॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

## अथ चतुर्थाध्यायस्य षष्ठः खण्डः ।

अग्निष्टे पादं वक्तेति । स ह श्वोभूते गा अभिप्रस्थाप-

वक्ष्यमाणं वचनमिति । प्राची दिक् कला अवयवाः ब्रह्मणः पादस्य चतुर्थो भागः प्रतीची दिक् कला दक्षिणादिक्कला उदीची दिक् कलाः हे सोम्य एष वै चतुष्कलः पादो ब्राह्मणः स च प्रकाशवान् नाम प्रकाशेति पदवाच्यः । एकैकस्य गोः पादस्य चत्वारोऽवयवा भवन्ति पुरतः खुरद्वय पृष्ठतः पार्ष्णिद्वयं च तस्मात् कारणात् पादश्चतुष्कलो भवति । ततः प्राच्यादि दिक् चतुष्टयं ब्रह्मणः पादत्वेन प्रकाशेति नामकत्वेन चोपास्यं भवतीति भावः । स य उपासको विद्वान् एतं ब्रह्मणश्चतुष्कलं पादमुक्तप्रकारेण प्रकाशवानित्युपास्ते समुपासनं करोति स तथोपासकोऽस्मिन् लोके प्रकाशवान् भवति । न केवलं प्रकाशवानेव भवति अपि तु प्रकाशवतः प्रकाशविशिष्टान् लोकान् जयति । को हि प्रकाशवान् लोकान् जयति तत्राह य उपासक एतं चतुष्कलं ब्रह्मणः पादं प्रकाशवान्नामकमुपास्ते तस्याधिकारिणः प्रकाशात्मकलोकजयफलं भवतीति भावः ॥३॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
पंचमः खण्डः ॥ ५ ॥

एवमृषभः स्वयं ब्रह्मणः पादं सत्यकामायोपदिश्यते तुभ्यं पादं पादान्तरम् अग्निर्वक्ता । पादान्तरं ब्रह्मणस्तेऽग्निरुपदेक्ष्यतीति कथयित्वा ऋष-

Scanned by CamScanner

याश्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥

तमग्निरभ्युवाद सत्यकामा इति भगव इति ह प्रतिशुश्राव ॥२॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥३॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य

भस्तूष्णी जात इति । ततश्च सः सत्यकामः श्वोभूतेऽपरदिवसे नित्यनैमित्तकं सन्ध्यावन्दनादिकमावश्यकं कर्म कृत्वा आचार्यगृहं प्रति गाः अभिप्रस्थापयांचकार । गाश्चारयन् शनैः शनैराचार्यकुलं प्रस्थितोऽभूदित्यर्थः । ता गाव शनैश्चरन्त्यो गुरुकुलाभिमुखेन गच्छन्त्यो यत्र यस्मिन् काले देशे च अभिशायं निशायां रात्रौ अभिसंबभूवुः मिलित्वा एकत्र संस्थितास्तत्र तस्मिन् स्थाने तस्मिन् निशामुखे च स सत्यकामोऽग्निमाहवनीयाग्निमुपसमाधायाहृत्य गाश्चोपरुध्य सायं सन्ध्यामुपास्य समिधमाधाय समिदाधानं कृत्वा ऋषभवचनमनुस्मरन् अग्नेराहवनीयाग्नेः पश्चात् दिशि स्वयं प्राङ्मुखो भूत्वोपविवेशोपविष्टवानित्यर्थः ॥१॥

तमग्नेः पश्चात्समुपविष्टं सत्यकामम् अग्निरभ्युवाद प्रोवाच सत्यकामा इति । हे भगवन् इत्येवंक्रमेण सत्यकामः प्रतिशुश्राव प्रोवाच । सोम्य ते तुभ्यं ब्रह्मणो द्वितीयं पादमहं ते ब्रवाणि कथयामीति । ब्रवीतु मे भगवानिति सत्यकामः प्रोवाच । तस्मै सत्यकामायाग्निः प्रोवाचेति । पृथिवी कला ब्रह्मणोऽवयवेत्यादि अनन्तवान्नाम । अनन्तवन्नाम्नोपास्य

एतमेवं विद्वाश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥४॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
षष्ठः खण्डः ॥ ६ ॥

## अथ चतुर्थाध्यायस्य सप्तमः खण्डः

हंसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाश्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥

तं हंस उपनिपत्याभ्युवाद सत्यकामा३ इति भगव इति

इत्यर्थः स य इत्यादि खण्डान्तो मन्त्रार्थः स्वयमूहनीयः ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
षष्ठः खण्डः ॥६॥

अग्निदेवतोपदेशं समाप्यादित्याधिष्ठितहंससंवादं दर्शयितुमाह (हंसस्ते पादं वक्तेतीति) हे सत्यकाम ! अहं ते ब्रह्मणः पादैकमुपदिष्टवानस्मि अपरं पादं ब्रह्मणः आदित्यप्रतिनिधिहंसस्ते कथयिष्यतीति कथयित्वोपरराम । अत्र हंस आदित्यशौक्ल्यात् पतनसमानत्वाच्च । (स ह श्वोभूते गा इत्यादि ) स ह सत्यकामः श्वोभूतेऽपरेद्यु र्नित्यनैमित्तिकं संध्यावन्दनादिकमावश्यक कर्म कृत्वा गा अभिप्रस्थापयांचकार आचार्यकुलाभिमुख्येन गाः प्रस्थापयामास । ता यत्राभिसाय बभूवुः ताः सर्वा गावो यत्र यस्मिन् देशे यत्र काले च निशामुखे इत्यर्थः परितः स्थिता अभवन् तत्र देशे काले चाग्निमुपसमाधायाग्निमाहृत्य गा उपरुध्य सध्यादिकमुपास्य समिधमाधाय समिधाधानं कृत्वा अग्निवाक्यं ध्यायन् अग्नेः पश्चात् प्राङ्मुखो भूत्वा उपोपविवेशोपविष्टवान् ॥१॥

तं हंस उपनिपत्य तत्समीपमागत्याभ्युवाद प्रोवाच (हे सत्यकाम)

ह प्रति शुश्राव ॥२॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥३॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥४॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
सप्तमः खण्डः ॥ ७ ॥

## अथ चतुर्थाध्यायस्य अष्टमः खण्डः ।

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थाप-

इति भगव इत्येवंरूपेण प्रतिशुश्राव प्रोवाच । हंसः प्राह ब्रह्मणः सोम्य ते पादं ब्रवाणि कथय मीति । इतरः प्राह ब्रवीतु मे भगवानिति। तस्मै सत्यकामाय स हंस उवाच । हंसवचनमेव दर्शयति अग्नि कला सूर्यः कला चन्द्रः कला विद्युत् कला इत्यादिकं सर्वं पूर्ववदेव व्याख्येयम् । ज्योतिष्मान् अस्मिन् लोके भवति । अग्न्यादिकलात्मकब्रह्मणः पादमुपासकोस्मिन् लोके ज्योतिष्मान्तेजस्वी भवति तथा ज्योतिष्मतः सूर्यादिलोकान् जयति प्राप्नोतीति ॥४॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
सप्तमः खण्डः ॥७॥

हंससंवादमुपदर्श्य मद्गुसंवादं दर्शयितुमाह (मद्गुष्टे पादं वक्तेतीति) हे सत्यकाम ! ब्रह्मणः पादं कथयिष्यतीति कथयित्वा हंस उपरराम । तत्र

Scanned by CamScanner

याञ्चकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥१॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥२॥

ब्राह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥३॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोके भवत्यायतनवतो ह लोका-ञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवा-नित्युपास्ते ॥४॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य

अष्टमः खण्डः

मद्गुर्नाम जलचरः पक्षिविशेषः स चाप्संबन्धात् प्राणः अयमपि वृषभवत् देवताविष्ट एव ज्ञातव्यः। स ह श्वोभूते गा इत्यादि प्रकरणं पूर्ववदेव व्याख्येयम्। प्राणादिकलात्मकब्रह्मणः पादमुपासकस्य किं फलं भवति तत्राह (आयतनवानित्यादि)। प्राणादिकलानामुपासकः पुरुषोऽस्मिन् लोके आयतनवान् आश्रयवान् भवति न तु कदाचित् स निराश्रितो भवति। आयतनवतो ह लोकान् जयति। तत्रायतनवतः सावकाशान् लोकान् जयति प्राप्नोति। अन्यत्सर्वं पूर्ववदेव व्याख्येयमिति।

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य

अष्टमः खण्डः ॥८॥

Scanned by CamScanner

# अथ चतुर्थाध्यायस्य नवमः खण्डः ।

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम ३ इति भगव इति ह प्रतिशुश्राव ॥१॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वानुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामे ब्रूयात् ॥२॥

श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता

(प्राप हेत्यादि) । स सत्यकामो गाश्चारयन् नयन् च ब्रह्मवित्सन् गोभिः सहैवाचार्यकुलं गुरुगृहं प्राप प्राप्तवान् । गोभिः सह समागतं ब्रह्मतेजसा भासमानं तं सत्यकामं दृष्ट्वा तमभ्युवाद प्रोक्तवानाचार्यो गुरुः हे सत्यकाम इति सबोधयन् । ततो गुरुणा संबोधितः सत्यकामो भगवः भगवन्निति सबोधयन् प्रतिशुश्राव प्रोक्तवान् सत्यकामः ॥१॥

हे सोम्य ! त्वं ब्रह्मविद् ब्रह्मज्ञानीव वै प्रतिभासि । तेजसा तर्कयामि यत्त्वं ब्रह्मज्ञानी संवृत्त इत्यर्थः । को नु त्वानुशशासेति कस्ते ब्रह्मोपदिष्टवानित्यर्थः । इतरः प्राह अन्ये मनुष्येभ्य इति प्रतिजज्ञे । मनुष्येभ्योऽन्ये देवा एव मामनुशिष्टवन्तः न हि मां मनुष्या उपदिष्टवन्तः किन्तु तदतिरिक्ता देवा एवेति प्रतिज्ञातवान् सत्यकाम इति । भगवानित्यादि भगवानेव कामे इच्छायां सत्याम् मे मह्यं ब्रूयात् वक्ष्यति अत इतरप्रार्थनं निरर्थकमेवेति । किं च भगवद्दृशेभ्यो ब्रह्मज्ञानिभ्यः श्रुतं यत् आचार्यमुखादेव विदिता ज्ञाता विद्या साधिष्ठं साधुतमं प्रापत् प्राप्नोति । यद्यपि ब्रह्मोपदेशो मेऽभवत्तथापि मुखात् श्रुतैव विद्या हितकारिणी भवतीति भवानेव सर्वमुपदिशतु इति शिष्याभ्यर्थनम् । ततो गुरुस्तस्मै सत्यकामाय एतत्सर्वं यथावत् ब्रह्मोवाच ब्रह्मोपदेशं कृतवान् । षोडशकलब्रह्मविज्ञानमेवोक्तवानिति यावत् । (अत्र हेत्यादि) । अत्र षोडशकलब्रह्मविद्यायां किंचिदपि न

साधिष्ठं प्रापयतीति तस्मै हैतदेवोवाचात्र ह न किंचन वी-
यायेति वीयायेति ॥३॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
नवमः खण्डः ॥९।

## अथ चतुर्थाध्यायस्य दशमः खण्डः ।

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्म-
चर्यमुवास तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार स ह

वीयाय पार्थक्यं न प्राप्तवान् तस्मात् विद्याप्रकारे भेदाभावात् अन्यूनानति-
रिक्तं तदेवोवाच अर्थात् वृषमादिभिर्देवाधिष्ठितैर्यदुपदिष्टं तदेवोपदिष्टवान्
आचार्य इति पार्थक्यं किमपि न प्रापेति भावः वीयाय वीयायेति द्विरुक्ति-
र्विद्यासमाप्ति द्योतयति ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
नवमः खण्डः ॥ ९ ॥

षोडशकलब्रह्मविद्यां परिसमाप्य स श्रुत्युपकोशलविद्यां वक्तुकामः
प्राह (उपकोशलो ह वै इत्यादि) । इतोऽनन्तरपूर्वं सत्यकामस्य जाबालस्य
विद्या प्रदर्शिता ततो जाबालशिष्यस्य विद्याप्राप्तिप्रकारः प्रदर्श्यते ।
अत्रापि विद्याप्राप्तिरतिशयितशुश्रूषयैव भवतीति दर्शयिष्यति । पूर्वप्रक-
रणे गोसहस्रवृद्धिपर्यन्तं कालमवधिं कृत्वा गुरोः शुश्रूषां कुर्वन् वर्षगणं
प्रोष्य त्वराररहितो यथासमये देवादिनोपदेशं प्राप्य कृतार्थोऽभवत् । अत्र
तु आचार्यकुले वसन्नेव सत्वरः शुश्रूषया विद्यां प्राप्तवानिति दर्शयिष्य-
तीति । (उपकोशलो ह) उपकोशलनामकः कामलायनः कमलऋषेरपत्यं
पुमान् सत्यकामे जाबाले पूर्वोक्ते जबालासुते ब्राह्मणे तदन्तेवासित्वमंगीकृ-
त्य विद्याप्राप्तये ब्रह्मचर्यमुवास विद्याप्राप्तये निवासं कृतवान् । तस्य ह

Scanned by CamScanner

स्मान्यानन्तेवासिनः समावर्तयंस्तं ह स्मैव न समावर्त-
यति ॥१॥

तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचा-
रीन्मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव
प्रवासाञ्चक्रे ॥२॥

स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्म-

गुरोः सत्यकामस्याग्नीन् गुरुप्रतिष्ठितान् आहवनीयादिकानग्नीन् द्वादशवर्षाणि द्वादशवर्षं यावत् परिचचार तदग्निशुश्रूषां कृतवान् । स ह सत्यकामः तदन्यान् तद्व्यतिरिक्तान् अन्तेवासिनो विद्यार्थिनः समावर्तयन्नपि एनं ब्रह्मविद्यार्थिनं न समावर्तयति स्म । स्वाध्यायार्थिनोऽन्यान् ब्रह्मचारिणः स्वाध्यायमध्याप्य समावर्तनं कुर्वन्नपि ब्रह्मविद्याभिलाषुकोयमिति मन्वानः पुष्कलशुश्रूषामन्तरेण ब्रह्मविद्या नोपदेष्टव्येति मत्वा तमेव केवलं नैव समावर्तनं करोतिस्मेति भावः ॥१॥

तं सत्यकामं जायोवाच तत्पत्नी प्रवोचत् । अयं ब्रह्मचारी त्वदीयः शिष्यस्तपसा तप्तः कृततपस्य इत्यर्थः कुशलं सम्यग् यथा स्यात् तथा तवाग्नीन् पर्यचारीत् तवाग्नेः शुश्रूषामकरोत् । एतादृशपरिचारकाय कुशलाय यदि त्वं विद्यां नोपदेक्ष्यसि तदा तदीयशुश्रूषया संतुष्टा अग्नयस्तव निन्दां करिष्यन्ति । अतः प्रब्रूह्यस्मा इति तस्मात् तव निन्दां यथा न करिष्यन्ति अग्नयस्तथा अस्मै उपकोशलाय विद्योपदेशं झटिति कुरु । एवं प्रकारेण तस्य भार्या कथितवतीत्यर्थः । तस्मै उपकोशलाय एवं यथोक्तप्रकारेण जायया स्वपत्न्या नोदितोपि आचार्यस्तस्मै अप्राच्यानुपदिश्यैव प्रवासांचक्रे देशान्तरं प्रति प्रोषितः ॥२॥

स ह व्याधिनाऽनाशितुं दध्रे । उपकोशलो ह व्याधिना मानसिक

चारिन्नशान किन्नु नाश्नासीति स होवाच बहव इमेऽस्मिन्पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥३॥

अथ हाग्नयः समुदिरे तप्तो ब्रह्मचारी कुशलं नः पर्य-

पीडितः सन् दुःखाधीर्मानसी व्यथेति कोशात् व्याधिशब्दो मानसिकदुःखद्योतकः सर्वानेव समावर्तयति मां तु न समावर्तयति नोपदिशति च कदा मामुपदेक्ष्यति समावर्तयिष्यति चेत्याकारकं हृद्गतं दुःखं तस्येति । अनाशितुं भोजनाभावाय दध्रे अवतस्थे भोजनाभावविषयकं निश्चयं कृतवानित्यर्थः । एवमनशनाय व्यवस्थितं तमुपकोशलं ज्ञात्वा आचार्यजाया गुरुपत्नी प्रोवाच हे ब्रह्मचारिन् अशान भोजनं कुरु परित्यज्य मानसं दुःखम् किं नु नाश्नासीति किं कारणं विद्यते यत् त्वं भोजनं न करोषि कुरु भोजनम् । एवमाचार्यजायया प्रतिबोधितः स उपकोशल उवाच प्रोक्तवान् । किमुक्तवान् तत्राह बहव इत्यादि) अस्मिन् अहं सुखी अहं दुःखीत्यादि मानसप्रत्यक्षविषयीभूते पुरुषे पुरिशयनात् पुरुषः कर्मफलभोक्ता वा पुरुषो जीव तस्मिन् बहवोऽनेकप्रकारकाः ब्रह्मप्राप्तिव्यतिरिक्ताः कामाः काम्यमाना विषयाः कलत्रपुत्रादयः नानात्यया अनेकप्रकारकगर्भजन्मजरामरणादि लक्षणफलोत्पादका मनसि अनुक्षणं विपरिवर्तमानाः सति । अतस्तद्विषयभयात्मकव्याधिभिः प्रतिपूर्णोस्मि तैं दुःखैरनवरत समाविष्टोस्मि तस्मादेव कारणात् नशिष्यामि भोजनं न करिष्यामीत्येव क्रमेण गुरुपत्नीमुवाचेति ॥३॥

(अथ हाग्नय इत्यादि) । अथानन्तरं शिष्यगुरुपत्न्योर्वाक्यश्रवणानन्तरं सुश्रूषाप्रीता अग्नयो गार्हपत्यादयोग्निदेवतास्तदुपरि दयां कुर्वाणाः समूदिरे संभूय मिलित्वा उक्तवन्तः । किमुक्तवन्तस्तत्राह तप्त इत्यादि) । तप्तः

**चारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ॥४॥**

**प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कञ्च तु खञ्च न विजानामीति ते होचुर्यद्वाव कं**

तपसा युक्तोऽयं ब्रह्मचारी व्रती कुशलं समीचीनरूपेणास्मान् पर्यचारीत् परिचरणं कृतवान् बहुकालात् तपस्तपन् शास्त्रीयविधानेनास्माकं शुश्रूषां कृतवान् हन्त हन्तेत्यनुकम्पायाम् अस्मै तपोयुक्ताय ब्रह्मचारिणे प्रब्रवामेति ब्रह्मविद्यां कथयिष्यामः । एवं संप्रधार्य तस्मै उपकोशलाय ते प्रीताग्नयो वक्ष्यमाणं प्रोचुरिति ॥४॥

किमुक्तवन्तोऽग्नयस्तत्राह (प्राण इत्यादि) । (प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति) । एवमग्निभिरुपदिष्टः स उपकोशल उवाच प्रोक्तवान् हे अग्नय एतदहं विजानामि यत् प्राणो ब्रह्म यस्य प्राणस्य शरीरे सन्निधानात् जीवनं भवति यस्य प्राणस्य वियोगे जीवनं न भवति एतादृशवायुविशेषे प्राणस्य रूढिर्विद्यतेऽतोयुक्तं प्राणस्य ब्रह्मत्वम् । कं खमोस्तु प्रसिद्धिर्न विद्यतेऽतस्त-योः कथं ब्रह्मत्वमिति । अयमाशयः अग्निभिः प्राणादिप्रतीकोपासनं नोप-दिश्यते । जन्मजरामरणादिसंसारभयाकुलस्य मुमुक्षोः मोक्षायैवप्रवृत्तत्वात् । ततो ब्रह्मैवोपास्यमग्निभिरुपदिष्टम् तत्र प्राणसामानाधिकरण्येन ब्रह्म निर्दि-ष्टम् तत्राशेषजगत् प्राणयितृत्वयोगेन प्राणशब्दितत्वं ब्रह्मण उपपद्यते इति यत् प्राणो ब्रह्मेत्युक्तमग्निभिस्तत् विजानामीति कथितमुपकोशलेन कं खं ब्रह्मेत्युक्तं तत्तु न विजानामीति कथितमुपकोशलेनेति । ते होचुरित्यादि तदभिप्राय विजानन्तोऽग्नयस्ते होचुरुक्तवन्तः यद्वाव कं तदेव खं यदेव कमिति । कं खमित्यनयोः परस्परं विशेषणविशेष्यभाव इत्येवंक्रमेण स्वकीयाभिप्रायं ते उक्तवन्त इति । यद्यपि यद्वाव कं तदेव खमित्यनेनैव विशेषणविशेष्यभावस्य परस्पर प्रतिपादनसंभवेनापरिच्छिन्नसुखरूपं ब्रह्म-

Scanned by CamScanner

तदेव खं यदेव खं तदेव कमिति प्राणञ्च हास्मै तदाकाशञ्चो-
चुः ॥५॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
दशमः खण्डः ॥ १० ॥

## अथ चतुर्थाध्यायस्य एकादशः खण्डः ।

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य

त्यर्थोऽनुक्त एव ततश्च यदेव खं तदेव कमिति कथनं पुनरुक्तमिव भवति तथापि द्विर्बद्धं सुबद्धं भवतीति न्यायात् दार्ढ्यार्थं तथा कथनम् यद्वा अपरिच्छिन्नसुखरूपत्वेन सुखरूपापरिच्छिन्नत्वेन चोरामनासिद्धये परस्परविशेषणविशेष्यभावोपदेशस्य सार्थक्यं संभवतीति भावः । प्राणं च हास्मै इत्यादि । जगत्प्राणयित्वेन प्राणत्वविशिष्टं यद् ब्रह्म तदेवापरिच्छिन्नसुखरूपमपि भवतीति तेऽग्नयस्तस्मै ऊचुरिति ॥५॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्याये
दशमः खण्डः ॥१०॥

यथोक्तप्रकारेणाग्निभिर्ब्रह्मोपदेशं कृत्वा ब्रह्मविद्याया अंगभूता अग्निविद्याप्युपदेष्टव्येत्याशयेनाग्निविद्योपदिश्यते (अथ हैनमित्यादि) अथानन्तरं जगत्प्राणयितृ अपरिच्छिन्नसुखात्मक ब्रह्मोपदेशानन्तरम् समुपदिष्टब्रह्मविद्यमेनमुपकोसलम् गार्हपत्यस्तन्नामकोऽग्निरग्निविद्यां वक्ष्यमाणामनुशशास समुपदिष्टवान् । अथशब्दः प्रकृतविषयतां दर्शयति तस्मात् अथशब्द एनमिति च पदमग्निविद्याया ब्रह्मविद्यांगत्वं सूचयतः अतोऽग्निः उपदेशानन्तरमंगोपदेश आवश्यक इव भवतीति अगभूतामग्निविद्यामाह । उपदेशप्रकारं दर्शयति पृथिव्यग्निरन्नमादित्य इति । हे उपकोसल पृथिवी इय परिदृश्यमाना अग्निराहवनीयादिकः सर्वः अन्नमदनीय सर्वो व्रीहि यवादि-

**इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहम-स्मीति ॥१॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति**

कम् । आदित्यः सूर्यः सर्वेषां पाचक इत्येताश्चत गार्हपत्यस्याग्नेस्तोऽस्तनव इति । आदित्ये आदित्यमंडले य एषः पुरुषः पुरुषविधो दृश्यते समुपलभ्यते स पुरुषोऽहमस्मि स एवाहमस्मि न ततो भिन्नोऽहमस्मि । गार्हपत्यस्याग्नेश्चत्वारि पृथिव्यादीनि रूपाणि तेषां चतुर्णां रूपाणां मध्ये अग्न्यादित्योः क्तृत्वप्रकाशकत्वपरूपसाधर्म्यात् यादृशमैक्यं विद्यते न तादृशमेकत्वमन्नपृथिवीभ्यां सह । अन्ने पृथिव्यां च पाचकत्वप्रकाशकत्वयोरभावात् । न नु तर्हि अग्नितनुत्व कथं तयोरिति न शंकनीयं व्यापधर्मदेवत्वं द्रव्यत्वप्रयमेत्वादिकनादाय कथंचित् तनुत्वसंभवात् । ततश्चाग्नेरादित्येन सह यादृशमेकत्वं विद्यते न तादृशमेकत्वमन्नपृथिवीभ्यां सहेति । अत आदित्य एवाहमस्मि न तु पृथिव्यहमन्नोऽहमिति कथयति अग्निरिति ॥१॥

स य विद्वान् उपासक एतमग्निम् एवं यथोक्तप्रकारेणोपास्ते उपासनं करोति स अपहते पापकृत्याम् ब्रह्मप्राप्तिप्रतिबन्धकपापं कर्मापहन्ति विनाशयति। अग्निविद्योपासकोऽग्निविद्याप्रभावेण ब्रह्मप्राप्तिप्रतिबन्धकपापं कर्म विनाश्य प्रतिबन्धरहितो ब्रह्मप्राप्तो भवतीति भावः । लोकीभवत्याग्नि उपासकः ब्रह्मलोकप्राप्ति प्रतिबन्धक दुरितविनाशात् निष्प्रत्यूहं ब्रह्मलोकप्राप्तिमान् भवतीति भावः । यद्यपि ब्रह्मलोकप्राप्तिः ब्रह्मविद्याफलमेव ब्रह्मविद्ययैव तत्प्राप्तिसंभवात् । दुरितप्रतिबन्धकनिवृत्तिरपि ब्रह्मविद्याप्रभावादेव दुरितनिवृत्तिमन्तरेण ब्रह्मलोकप्राप्तेरसंभवात् । यथा चक्षुषा जायमानं घटज्ञानं घटचक्षुःसंयोगमन्तरेणा संभाव्यमानं सत् संयोगं व्यापाररूपेण अपेक्षते तथैव दुरितनिवृत्तिरपि द्वारभूतेति तत्सिद्धिरपि ब्रह्म-

सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥२॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
एकादशः खण्डः ॥ ११ ॥

विद्ययैवाक्षिप्ता भवतीति तदर्थमंगविद्यानिरर्थिकैवेति तथापि अंगिफलेनाऽगस्तुतेः संभवादिति। अथवा अपहते पापकृत्यमित्यत्र पापशब्दो ब्रह्मविद्योत्पत्तिप्रतिबन्धकदुरितपरकः लोकीभवतीत्यत्र लोकशब्दश्च ब्रह्मलोकप्राप्तिमर्गिलक्षणानिलोकपरकश्च द्रष्टव्यः। यद्यपि अग्निलोकोऽर्चिरादिमार्गे प्रथमो भवति स चाय लोको ब्रह्मविद्ययैव स्यात् ततश्चाग्निविद्या निरर्थकैवेति तथापि "उपवयं तं भुंजामोऽस्मिंश्च लोकेऽमुमिंश्च" इत्यादि फलदर्शनात्। यस्यैतज्जन्मनि ब्रह्मविद्या न जाता स यदि अग्निविद्यामुपास्ते तदा अग्नयो ब्रह्मप्राप्तिप्रतिबन्धकपापविनाशद्वारेणाग्निलोकं प्रापयित्वा स्वलोके ब्रह्मविद्याप्राप्त्युपयोगि रक्षणादिकं कुर्वन्तीति। (सर्वमायुरेतीति) यावता आयुषा ब्रह्मोपासनाय समाप्तिर्भवति तत् सर्वमायुः प्राप्नोतीत्यर्थः ज्योग्जीवति व्याध्यादिभिरदूयमानो यावद्ब्रह्मप्राप्तिम् सम्यगुज्ज्वलो जीवतीत्यर्थः। (नास्यापरपुरुषाः क्षीयन्ते इति) अस्य गार्हपत्याग्न्युपासकस्याग्निविद्याप्रभावात् तदग्रे अवरपुरुषाः पुत्रपौत्रशिष्यप्रशिष्यादि कनिष्ठा न क्षीयन्ते न मृता भवन्ति पितरि जीवति पुत्रादेः ज्येष्ठे जीवति कनिष्ठस्य मरणं न भवतीत्यर्थः यद्वा न क्षीयन्ते न म्रियन्तेऽपि तु सर्वे एव ब्रह्मविदो भवन्ति "न तस्य प्राणाः समुत्क्रामन्ति इहैव समवलीयन्ते" इति श्रुत्यन्तरात्। य एतमेव विद्वान् गार्हपत्याग्निमुपास्ते तदुपासनं करोति हे उपकोशल तमग्निविद्योपासकं वयमग्नयः अस्मिन् मर्त्यलोके अमुष्मिन् परलोके च भुंजामः पालयामः ब्रह्मप्राप्तिपर्यन्तं विघ्नादिना सततमेव तद्र-

Scanned by CamScanner

# अथ चतुर्थाध्यायस्य द्वादशः खण्डः ।

अथ हैनमन्वाहार्यपचनोऽनुशशासापो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोहमस्मि स एवाहमस्मीति ॥१॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उपवयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
द्वादशः खण्डः ॥ १२ ॥

क्षणं कुर्मः यावता ब्रह्मप्राप्तौ तस्य कश्चित् प्रतिबन्धको न भवतीति । एवं प्रकारेणाग्नय उपकोशलाय प्रीताः सन्तः प्रोचुरिति ॥२॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
एकादशः खण्डः ॥११॥

गार्हपत्याग्नेरनुशाशनानन्तरं दाक्षिणाग्नेरनुशासनप्रकारं दर्शयितुमाह (अथ हैनमित्यादि) । अथ गार्हपत्याग्नेरनुशाशनानन्तरम् एनमुपकोशलं श्रद्धातपोभ्यां युक्तम् ह अन्वाहार्यपचनो दक्षिणाग्निरनुशशासोपदिष्टवान् वक्ष्यमाणप्रकारेण । किमनुशाशनं कृतवान् तत्राह (आपो दिशो नक्षत्राणि चन्द्रमा इति)। हे उपकोशल आपो जलानि दिशः काष्ठा नक्षत्राणि चन्द्रमाश्चेति ममैव रूपाणि भवन्तीति । अस्मिन् चन्द्रमसि यः पुरुषः दृश्यते पुरुषाकारः शिरःपाण्यादिलक्षण उपलभ्यते सोहमेव स एवाहमस्मीति ॥१॥

स यः उपासक एतमेवं यथोक्तप्रकारेणोपास्ते तदुपासनं करोति अपहते पापकृत्याम् इत्यादिकं सर्वं गार्हपत्याग्निप्रकरणवदेव व्याख्येयमिति ।

# अथ चतुर्थाध्यायस्य त्रयोदशः खण्डः।

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
त्रयोदशः खण्डः ॥ १३ ॥

॥२॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य
द्वादशः खण्डः ॥१२॥

दाक्षिणाग्नेरनुशाशनानन्तरमाहवनीयाग्नेरनुशाशनं दर्शयितुमाह (अथ हैनमित्यादि)। अथ दक्षिणाग्नेरनुशाशनानन्तरम् आहवनीयोऽग्निरेनमुपकोशलम् विद्याप्राथिनम् अनुशशास अनुशाशनमुपदेशं कृतवान्। अनुशाशनप्रकारमेव दर्शयति प्राण इत्यादि। (प्राण आकाशो द्यौर्विद्युदिति)। हे उपकोशल प्राणादयश्चत्वारो ममैव शरीरभूता इत्यर्थः विद्युति य एषः पुरुषः पुरुषाकारो दृश्यते सोहमस्मि स एवाहमस्मीति। विद्युत पुरुषस्य प्रकाशकत्वम् आहवनीयोपि प्रकाशक इति प्रकाशकत्वसाधर्म्यात् आहवनीयेन सहैक्यं भवति। अन्यत्सर्वं पूर्ववदेव ज्ञातव्यम् ॥ १।१ ॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्याये
त्रयोदशः खण्डः ॥१३॥

# अथ चतुर्थाऽध्यायस्य चतुर्दशः खण्डः

**ते होचुरुपकोशलैषा सोम्य तेऽस्मद्विद्यात्मविद्या चाचार्य-स्तु ते गतिं वक्तेत्याजगाम हास्याचार्यस्तमाचार्योऽभ्युवादो-पकोसल ३ इति ॥१॥**

प्रत्येकस्य गार्हपत्यादेरुपदेशानन्तरम् ते गार्हपत्यादयो मिलित्वाह ऊचु-रुक्तवन्तः। किमुक्तवन्तस्तत्राह (एषेत्यादि)। हे उपकोशल सोम्य ते तुभ्यम् कथिता या विद्या एषा अस्मद् विद्या च अग्निविद्या चात्मविद्या परमात्म-विद्या च। अत्र चशब्दो विद्याद्वयस्यांगांगिभूतस्य या उपदेशक्रिया तस्यां समुच्चयं प्रतिपादयति। ततश्चाग्निविद्या परमात्मविद्या चोपदिष्टाऽस्माभि-रित्यर्थः। आचार्यस्तु ते गतिं वक्तेति। हे उपकोशल तव गुरुस्त्वां ब्रह्म-विद्यार्थिनं ब्रह्मोपदेशमकृत्वा देशान्तरं गतवान् प्रोषिते च गुरौ त्वमतीव खि-न्नो जात इति त्वामाश्वासयितुं ब्रह्मणः स्वरूपमात्रं तदंगभूतामग्निविद्यां चोपदिशामः आचार्यात् प्राप्तैव विद्या साधीयसी भवतीति कृत्वा आचार्य एव संयद्वामत्वादिगुणकं ब्रह्म तदुपासनस्थानमक्षिरूपमर्चिरादिकां गतिं चोपदिशतु वयं केवलमग्निविद्याया एवोपदेष्टारोऽवशिष्टं सर्वं स एवाचार्यो वक्ष्यति न केवलं गतिमात्रमिति भावः। (आजगाम हास्याचार्य) इति। एवं-प्रकारेणाग्निभिर्वार्तालापं कुर्वत उपकोशलस्याचार्यो जाबालः सत्यकामो देशान्तरादाजगामागतवान्। आगत्य चाचार्यस्तमुपकोशलं शिष्यं प्रति अभ्युवाद प्रोवाच हे उपकोशल इति। हे भगव भगवन् इत्येवंक्रमेण प्रति-शुश्राव प्रतिवचनमुवाच। ततो गुरुराह हे सोम्योपकोशल ते तव मुखं ब्रह्म-विद् इव ब्रह्मज्ञानीव भाति लक्ष्यते। (कोऽनु त्वानुशशासेतीति)। त्वामुपको-शलं क उपदेष्टा अनुशशासोपदेशं कृतवानिति पप्रच्छाचार्य इति। आचा-र्यणैवमुक्त उपकोशलः प्राह (को नु मानुशिष्यादित्यादि) हे आचार्य भग-

भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वानुशशासेति कोनु मानुशिष्याद्भो इतिहापेव निन्हुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किं नु सोम्य किल तेऽवोचन्निति ॥२॥

इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्न हन्तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लि-

बति प्रोषिते अत्र किल भवन्तं विहाय कोनुशिष्यादिति अपेवनिह्नुते अपनिह्नुत इवेत्यर्थः नापनिह्नुते न यथावत् अग्निभिः कथितमित्यपि ब्रवीत्य-भिप्रायः । ततोऽग्नीन् निर्दिश्य इमे अग्नयो नूनं निश्चितमिदानीमीदृशी ज्वलनाकारतया परिदृश्यमाना एते एवाग्नयः पूर्वमन्यादृशा अन्याकाराः सन्तो मामुपदिष्टवन्तः इति एवं ह उपकोशलोऽग्नीन् निर्दिश्याभ्यूदे उक्तवानिति । तत आचार्यः प्राह हे सोम्य तेऽग्नयः किमवोचन् किमुक्तवन्तस्तत् कथयेति ॥१।२॥

इतरः प्राह (इदमिति)ह प्रतिजज्ञे एतावदुपदिष्टमग्निभिरिति प्रतिजज्ञे प्रतिज्ञातवानिति । पुनर्गुरुराह लोकानित्यादि । हे सोम्योपकोशल तेऽग्नयस्ते लोकान् पृथिव्यादीन् लोकानेवावोचन् ब्रह्मविद्यांगभूतामग्निविद्यामेव केवलमुक्तवन्तो ननु यद् ज्ञातव्यं सकलकारणं ब्रह्म तदुद्देशं न कृतवन्तः। अहं तु ते तुभ्यं तद् ज्ञातव्यं यद् चराचरशरीरकं कारणकारणं यद् विज्ञातेन सर्वं विदितं भवति तद् ब्रह्मसाकल्येन तुभ्यं वक्ष्यामि कथयामि यदि त्वं श्रोतुमिच्छसि तदा । इति कथयित्वा यदुपदेष्टव्यं तत् कथयति हे सोम्य यथा पुष्करपलाशः कमलपत्रं आपो नाश्लिष्यन्ते जललेपेनापि लिप्तं न भवति एवमेवैवंविदि ब्रह्मज्ञानिनि पापं कर्म दुरितं सुकृतं च नाश्लिष्यते पापकर्मणा तस्य संश्लेषो न भवतीत्यर्थः । अत्र पापाश्लेषो नाम पापका-

ष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥३॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
चतुर्दशः खण्डः ॥ १४ ॥

## अथ चतुर्थाध्यायस्य पञ्चदशः खण्डः ।

य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चन्ति

रणीभूतनिषिद्धकर्मानुष्ठानेपि पापोत्पत्तिप्रतिबन्धकशक्तिमत्वमेव प्रकृते पापशब्दः सुकृतदुष्कृतोभयसाधारणः निषिद्धकर्मवर्मशर्मणामपि ब्रह्मज्ञानप्रतिबन्धकत्वाविशेषात् इति । शिष्यः प्राह मे मह्यं भगवान् ज्ञातव्यं यद् ब्रह्म तद् ब्रवीतु ब्रह्मोपदेशं कुरु इत्यभिप्रायः तस्मै होवाच एवं श्रद्धाविनयावनतायोपकोशलाय गुरुर्वक्ष्यमाणोपदेशं प्राह ।।३।।

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्याये
चतुर्दशः खण्डः ।।१४।।

उपकोशलायाचार्यः किमुक्तवान् तत्र तदीयोपदेशप्रकारमेव दर्शयितुमाह (य एषोऽक्षिणीत्यादि) अक्षिणि नेत्रे एषः पुरुषो बिंबरूपो दृश्यते ब्रह्मचर्यादिसाधनसम्पन्नेन योगिना एषोऽयमेव आत्मा सर्वेषां नियन्ता परमेश्वर इत्येवंक्रमेणाचार्यः प्रोवाचोक्तवान् । एतदमृतम् एष एवात्मा अमृतम् तत्रामृतत्वं निरतिशयभोग्यत्वलक्षणमेव । अभयं सर्वप्रकारकभयरहितम् तत्राभयत्वं नाम दुःखासंभिन्नत्वलक्षणम् । एतद् वर्ण्यमानमेतद् ब्रह्म अग्निभिरुपदिष्टं यद् ब्रह्म तदेवंभूतम् ब्रह्मत्वं निरतिशयबृहत्वात्मकम् । तत् तस्मात् कारणात् लेपरहितस्यानिपरमात्मप्रभावात् अस्मिन् अक्षिणि नेत्रे यद्यपि सर्पिर्वा घृतादिकं वा उदकं जलं वा कश्चित् सिंचति निक्षिपति तत्

वर्त्मनी एव गच्छति ॥१॥

एतं संयद्वाम इत्याचक्षत एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥२॥

एष उ एव वामनीरेष हि सर्वाणि वामानि नयति

निक्षिप्यमाणं जलं घृतं वा वर्त्मनि नेत्रस्य पार्श्वद्वयमेव गच्छति न तु नेत्रे लिप्तं भवति । नेत्रे वर्तमानपरमात्मप्रभावात् जलादिकं तत्र सक्तं न भवति किन्तु नेत्राद् बहिरेव यातीति भावः ॥१॥

तमेतं परमात्मानं संयद्वाम इत्याचक्षते । संयंति संगतानि वामानि वन्दनीयानि प्रार्थनीयानि यस्मिन् स संयद्वामः संयद्वामत्वं नाम सर्वकल्याणगुणाश्रयत्वम् सत्यसंकल्पत्वं वा स परमात्मा संयद्वाम इति कथ्यते अर्थात् सर्वकल्याणगुणानामाश्रयभूत इत्यर्थः । न केवलं परमात्मैव सर्वकल्याणगुणानामाधारोऽपि तु तादृशपरमात्मोपासकस्यापि संयद्वामत्वादिकं भवतीति दर्शयति । (एतं हि सर्वाणीत्यादि) एतमेतादृशपरमात्मोपासकमपि सर्वाणि वामानि प्रार्थनीयानि वस्तूनि अभिसंयन्ति अभिगच्छन्ति । य उपासक एवं क्रमेणैतादृशगुणविशिष्टं परमात्मानं वेद जानाति समुपासनं करोति तस्यापि तत्फलं भवतीति भावः ॥२॥

(एष एव उ वामनीरित्यादि) एषोऽक्षिस्थानगतः परमात्मैव वामनीः पुण्यफलप्रापयिता । यस्मात् कारणादयमक्षिस्थानाश्रितः परमात्मा स्वभक्तेभ्यो वामानि पुण्यानुरूपं पुण्यकर्मफलानि नयति प्रापयति प्रयच्छतीत्यर्थः तस्मात् कारणात् अयं वामनीरिति कथ्यते स च वामनीरयमेव न त्वन्य इति । एष एव परमात्मा सर्वाणि वामानि पुण्यानुरूपं पुण्यकर्मफलानि नयति प्रापयति तस्मादयं वामनीः । वामनीत्वगुणविशिष्टपरमात्मन उपासनं यः करोति तस्यापि तदेव फलं भवति तद्दर्शयति (सर्वाणि वामानि

**सर्वाणि वामानि नयति य एवं वेद ॥३॥**

**एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥४॥**

नयति य एवं वेदेति) । य उपासको वामनीत्वगुणविशिष्टमेनमक्षिस्थान-गतपरमात्मानं वेदोपासीत । स उपासकोपि सर्वाणि वामानि नयति प्रापयति । उपासकोपि वामनीत्वगुणविशिष्टो भवतीति भावः ॥३॥

(एष उ एव भामनीत्यादि) एषोऽक्षिस्थानगतः परमात्मैव भामनी सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तः । यस्मात् कारणात् सर्वलोकेषु आदित्यादिदीप्तिभिर्भाति दीप्यते "न तत्र सूर्यो भाति न चन्द्रतारकं कुतोयमग्निः तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्यन्तरात् । अतो भामानि नयतीति भामनीः अत्र भामनीत्वं नाम सर्वलोकव्याप्तदीप्तिमद्विग्रहयुक्तत्वमिति । भामनीत्वगुणविशिष्टपरमात्मोपासकस्यापि तादृशभामनीत्वगुणयुक्तत्वं भवतीति दर्शयति सर्वेषु लोकेषु भाति य एवं वेद । य उपासको भामनीत्वगुणविशिष्टमक्षिस्थानस्थानगतं परमात्मानं वेद विजानाति समुपास्ते स सर्वलोकेषु भाति दीप्तिमद्विग्रहयुक्तो भवतीति भावः । अत्र खलु संयद्वामत्ववामनीत्वभामनीत्वगुणेषु फल प्रदर्शनम् फललक्षणतात्पर्यलिंगोपन्यासेन संयद्वामत्वादिगुणेषु तात्पर्यप्रदर्शनार्थमेव न तु सर्पिवेदिकं वा सिंचतीत्येवार्थवादमात्रतयास्तावकत्वमिति ॥४॥

यथोक्तब्रह्मज्ञानवतो गतिप्रकारं दर्शयितुमाह (अथ यदु चैवमित्यादि) अथाथशब्दः प्रकृतविषयत्वज्ञापकः । अथ यदि अस्मिन् यथोक्तब्रह्मज्ञानिन पुत्रादयो मरणानन्तरं शव्यं शवदहनादिकं कर्म कुर्वन्ति यदु च यदि च यदि वा ते पुत्रादयस्तस्य ब्रह्मज्ञानिनो मरणानन्तरं शवदहनादिकं कर्म न कुर्वंति तथापि करणेऽकरणेपि ते ब्रह्मज्ञानिन इमं मानवलोकं देहं च परित्यज्या-

Scanned by CamScanner

अथ यदु चैवास्मिञ्छव्यं कुर्वन्ति यदि च नार्चिषमेवा-भिसम्भवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादि-त्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः ॥५॥

स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रति-पद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥६॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य
पञ्चदशः खण्डः ॥१५॥

र्चिषमेवाभिसंभवन्ति । तत् तत् पूर्वोपलक्षितं देवयानपंथानं ब्रह्मलोक-प्रापकमेव प्राप्नुवन्ति । अत्रार्चिरादिकाः शब्दास्तत्तदभिमानिदेवपरका एव आतिवाहिकास्तल्लिंगादिति सूत्रे तथैव प्रतिपादनात् । यद्यपि उपकोसलवि द्यांगभूताग्निविद्याप्रभावात् शवदहनादिवैगुण्येपि उपकोशलविद्यावतो न कापि क्षतिः किन्तु विद्यान्तरनिष्ठस्य दहनादिवैगुण्ये किञ्चिद्वैगुण्यमस्तीति तथापि न कमरणा वर्द्धते नो कनीयानिति श्रुतिसिद्धार्थानुवादित्वादस्य वाक्यस्यैतादृशार्थप्रत्यायकत्वाभावादिति। अर्चिषोऽभिसंभवन्ति,अर्चिरभिमा-निनीं देवतां प्राप्नुवन्ति । अर्चिषोऽह्नः अर्चिभिरभिमानिनी देवतोऽहर भिमानी देवतां प्राप्नुवन्ति । एवं चन्द्रमसो विद्युतं विद्युदभिमानिनीं देवतां प्राप्नुवन्ति । तत्पुरुषोऽमानवो मानवभिन्न एनान् ब्रह्मविदो ब्रह्म सत्यलोकं गमयति प्रापयति । एष देवपथो ब्रह्मपथः देवैरातिवाहिकैरमानवैर्नी यमानः पन्थाः मार्गो देवपथः तथा ब्रह्मप्राप्तिसाधनो मार्गो ब्रह्मपथः। एतेन देवमार्गेण प्रतिपद्यमाना गच्छन्तो ब्रह्मलोकं पुनरपि मानवमावर्तं संसार-सागरं नावर्तन्ते नावर्तन्ते न पुनः संसारमागच्छन्ति मुक्ता भवन्तीति ॥५।६॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्याये
पंचदशः खण्डः ॥ १५ ॥

Scanned by CamScanner

# अथ चतुर्थाध्यायस्य षोडशः खण्डः ।

एष ह वै यज्ञो योऽयं पवत एष ह यन्निदं सर्वं पुनाति यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च वर्तनी ॥१॥

तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्व-

रहस्यप्रकरणे प्रसंगात् तथा अरण्योक्तत्वलक्षणसाधर्म्यात् यज्ञे विनष्टे उत्पन्ने व्याहृतयः प्रायश्चित्तप्रयोजना होममन्त्रतया विधातव्याः तदभिज्ञस्यैव ब्रह्मत्वलक्षणमार्त्विज्यम् तस्य ब्रह्मणो मौनमावश्यकमित्येवमादि विधिप्रयोजनकमिद प्रकरणमारभ्यते (एष ह वै यज्ञ इत्यादि) योयं वायुः पवते एष ह वै यज्ञः एष हि वायुर्यन् गच्छन् सर्वमिदं पुनाति शोधयति ऊर्णावातेन शुद्ध्यतीति स्मृतिदर्शनात् वस्तुमात्रशोधकत्वं वायोः वर्षवातातपैर्वस्तुशुद्धिर्भवतीति स्मृत्यन्तरादौ लोके च प्रसिद्धेः । वायुप्रतिष्ठो यज्ञः श्रुत्यादिषु प्रसिद्धः "अयं वै यज्ञो योयं पवते" "वात एव यज्ञस्यारम्भको वातः प्रतिष्ठाः" इत्यादि दर्शनेन वायोः शोधकत्वं यज्ञरूपत्वं चेति । यदेष ह यस्मात् कारणात् यन् गच्छन् वायुः सर्वमिदं पुनाति पवित्रयति तस्मादेव कारणात् एषो वायुरेव यज्ञः । यन् पुनाति इति पदद्वयगतयोर्यकारनकारयोर्यज्ञशब्दे विद्यमानत्वात् अकारस्य च नकारविकारत्वात् यज्ञशब्दस्य यन् पुनातीति निर्वचनं वायोर्भवतीति भावः । पूर्वोक्तप्रकारेण यज्ञस्य वायोश्च तादात्म्यप्रतिपादनात् यज्ञस्य गन्तृत्वं संपाद्य तस्य गन्तुर्यज्ञस्य गमनमार्गं दर्शयितुमाह (तस्य मनश्चेत्यादि) तस्य यज्ञस्य मनोऽन्तःकरणं वाक् वाणी च वर्तनी मार्गः तत्र वाक् मन्त्रोच्चारणद्वारेण मनश्च मन्त्रार्थध्यानद्वारेण मार्गत्वमापद्यते । यज्ञस्य प्रवृत्तिसाधनभूतो वाङ्मनसयोर्मार्ग इत्यर्थः । तयोर्द्वयोर्वाङ्मनसयोर्मध्यात् अन्यतरामेकैकलक्षणाम् वर्तनीं मार्गम् मनसा

युरुद्गाताऽन्यतरां स यत्रोपाकृते प्रातरनुवाके पुरा परिधानी-
याया ब्रह्मा व्यववदति ॥२॥

अन्यतरामेव वर्तनिं संस्करोति हीयतेऽन्यतरा स यथैक-
पाद्व्रजन्रथो वैकेन चक्रेण वर्तमानो रिष्यत्येवमस्य यज्ञो
रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स इष्ट्वा पापी-

ब्रह्म संस्करोति। होता अध्वर्युरुद्गाता अन्यतरां वर्तनीं वाचा संस्करोति। यज्ञस्य मनः स्वरूपसाधनं प्रणिहितेन मनसा ब्रह्मसंस्करोति तथा अयोपि होत्राद्याः सम्यक् प्रयुक्तया वाचैव वाचं संस्कुर्वन्तीति भावः। स यत्र यज्ञे प्रातरनुवाके प्रातरनुवाकशस्त्रे उपाकृते प्रारब्धे क्षतिपरिधानीयायाः ऋचः प्राक् ब्रह्मा व्यववदति। अत्र विशब्दो विविधार्थकः निन्दितार्थको नञ् ततश्च विविधं निन्दितं च वदति मौनं परित्यजेत् चेत्। तदा अन्य-तरामेव वाग्लक्षणां वर्तनीं संस्कुर्वन्ति अन्यतरा मनोलक्षणावर्तनी हीयते। मौनं त्यजेत् चेत् तदा मनः- प्रणिधानस्य विनाशात् मनोलक्षणयज्ञवर्तनी संस्कारकस्य ब्रह्ममनसोऽभावात् एषा मनोलक्षणावर्तनी विनष्टा भवति। केवलं होत्रादिवाकसंस्कार्या वाग् लक्षणा यज्ञवर्तनी अवशिष्यते इति भावः। वाङ्मनसयोर्मध्ये एकस्याभावेपि प्रकृते का क्षतिरिति दृष्टान्तद्वा-रेण क्षतिमेव दर्शयति स (यथेत्यादि)। यथा येन प्रकारेण सः पुरुषः पंगुः एकपात् एकेन पदा व्रजन् गच्छन् मार्गमतिक्रामन् यथा वा एकेन चक्रेण वर्तमानः प्रवर्तमानो गच्छन् रथः रिष्यति विनष्टो भवति स्वलक्ष्यात् च्युतो भवति साधनाभावात् गन्तव्यस्थानं न गच्छतीत्यर्थः तथैवास्य यजमानस्य साधनविरहितो यज्ञो रिष्यति विनश्यति विगुणो भवतीत्यर्थः। यज्ञं रिष्यंतं विनश्यत् सत् तदनु यजमानो रिष्यति विनष्टफलको भवति विशेषणाभावेन विशिष्टमपि नष्टं भवतीत्यर्थः। स यजमानः इष्ट्वा साधनविरहितयज्ञं

यान् भवति ॥३॥

अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा ॥४॥

स यथोभयपाद् व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥५॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य

षोडशः खण्डः ॥१६॥

कुर्वन् पापीयान् भवति । अंगविगुणित कर्म कुर्वन् फलं न प्राप्नोति परन्तु लक्ष्यात् च्यवनाधोगतिं यातीति भावः ॥३॥

अथ यत्र यस्मिन् यज्ञे प्रातरनुवाक् शस्ते उपाकृते प्रारब्धे सति परिधानीयाया ऋचः प्राक् ब्रह्मा न व्यवदति विविधं निन्दितं च न वदति उभे एव वर्तनी मनोवाग्लक्षणे संस्कुर्वन्ति अन्यतरा एकापि न हीयते । स यथा उभयपात् व्रजन् मार्गमतिक्रामन् यथा वा उभाभ्यां चक्राभ्यां प्रवर्त्तमानो रथः प्रतितिष्ठति तथैवास्य यजमानस्य यज्ञः प्रतितिष्ठति साधनसंपन्नो भवति। यज्ञं प्रतितिष्ठन्तं तदनु यजमानः प्रतितिष्ठति स यजमानः साधनसंपन्नं यज्ञमिष्ट्वा कृत्वा श्रेयान् लब्धफलको भवतीति ॥४।५॥

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य

षोडशः खण्डः ॥ १६ ॥

यज्ञसाधनमार्गविनाशेन विशेषणनाशात् विशिष्टयज्ञभ्रंशे व्याहृतिहो-

# अथ चतुर्थाध्यायस्य सप्तदशः खण्डः

प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान् प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः ॥१॥

स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् ॥२॥

स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान्

मात्मकः प्रायश्चित्तमिति तद्वक्तुं व्याहृतिः प्रस्तौति (प्रजापतिरित्यादि) स प्रजापतिर्लोकानां सारादानेच्छया लोकानुद्दिश्यातपत् आलोचनात्मकं ज्ञानं कृतवान् दध्यौ इत्यर्थः। तेषां तप्यमानानामालोचनविषयतां प्राप्तानां लोकानां रसान् सारलक्षणान् प्रावृहत् उद्धृतवान् जग्राहेत्यर्थः। कस्य लोकस्य किमात्मकं सारमुद्धृतवान् तत्राह (अग्निं पृथिव्या इत्यादि) पृथिव्याः पृथिवीलोकात् अग्निलक्षणं सारमुद्धृतवान् अग्निलक्षणो रसः पृथिव्या इत्यर्थः। वायुमन्तरिक्षात् अन्तरिक्षलोकात् वायुं सारमुद्धृतवान् दिवो द्युलोकात् आदित्यं सूर्यलक्षणं सारमुद्धृतवान् अन्तरिक्षदिवोर्वाय्वादित्यौ सारभूताविति निश्चयं कृत्वा ततस्तयोर्द्वयोः सारयोर्ग्रहणं कृतवानित्यर्थः ॥१॥

पुनरपि सः प्रजापतिरेतास्तिस्रो देवता अग्निवाय्वादित्यलक्षणा उद्दिश्याभ्यतपत् आलोचनात्मकं ज्ञानं कृतवानित्यर्थः। तासां तिसृणामग्न्यादिदेवतानां तप्यमानानामालोचनविषयतां प्राप्तानां रसान् सारभूतान् प्रावृहत् उद्धृतवान् जग्राहेत्यर्थः। तत्र तप्यमानाग्निदेवतातः सारभूतं ऋचो ऋग्वेदमुद्धृतवान्। वायोर्यजूंषि वायुदेवतातो वायुसारभूतं यजुर्वेदमुद्धृतवान्। सामान्यादित्यात् आदित्यदेवतः सारभूतं सामवेदं जग्राहेति ॥२॥

पुनरपि स प्रजापतिरेतां त्रयीविद्यां ऋक्यजुःसामाख्यामुद्दिश्याभ्य-

प्रावृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥३॥

तद्यदृक्तो रिष्येद् भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टं सन्दधाति ॥४॥

अथ यदि यजुष्टो रिष्येद् भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य वरिष्टं सन्दधाति ॥५॥

तपत् आलोचनं कृतवान् । तस्यास्त्रयीविद्याया ऋगादिलक्षणायास्तप्यमानायाः रसान् सारभूतान् प्रावृहत् उद्धृतवान् तत्र ऋग्भ्यो ऋग्वेदेभ्यो भूरित्यात्मिकां व्याहृतिमुद्धृतवान् । यजुर्भ्यो भुवरिति सामभ्यः सामवेदात् स्वरिति स्व इत्याकारिकां व्याहृतिमुद्धृतवानिति ॥३॥

(तदित्यादि)तत् तस्मात् कारणात् ऋचः ऋचोनिमित्तात् ऋक्सम्बन्धादित्यर्थः यदि यज्ञो रिष्येत् क्षतिं प्राप्नुयात् तदा भूः स्वाहेतिमन्त्रेण गार्हपत्ये तन्नामकेऽग्नौ जुहुयादाहुतिं प्रक्षिपेत् । भूरिति व्याहृतेः ऋग्वेदसारभूतत्वात् ऋग्निमित्तकक्षतौ सत्यां तद्व्याहृतिद्वारेणैव तत्र शान्तिं कुर्यादिति भावः । ऋग्वेदनिमित्तकत्रुटे ऋग्वेदसारभूतव्याहृत्यैव समाधानं कुर्यादिति स्वयमेव श्रुतिर्दर्शयति(ऋचामेवेत्यादि)यत् ऋचां ऋक्संबन्धितद्विरिष्टं तत् यज्ञस्य क्षतम् ऋचामेव रसेन सारभूतेन भूरित्याकारकव्याहृत्या ऋचामेव वीर्येण ओजसा संदधाति समाधानं करोति ब्रह्मेतिशेषः ॥४॥

(अथ यदि यजुष्टो रिष्येत्) यजुष्टो यजुषो निमित्तात् यदि यज्ञो रिष्येत् क्षतं प्राप्नुयात् तदा यजुषां रसेन सारभूतेन भुवः स्वाहेति मन्त्रेण दक्षिणाग्नौ जुहुयात् हवनं कुर्यादिति यजुषामेव तद्रसेनेत्यादिपंचममन्त्रसमाप्तिपर्यन्तं व्याख्यानं कर्तव्यं पूर्ववदेवेति ॥५॥

Scanned by CamScanner

**अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहु-यात्साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टं सन्दधाति ॥६॥**

**तद्यथा लवणेन सुवर्णं सन्दध्यात्सुवर्णेन रजतं रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा ॥७॥**

षष्ठमन्त्रस्य अथ यदि सामतो रिष्येदित्यस्यापि व्याख्यानं पूर्ववदेव कर्तव्यमिति ॥६॥

अस्मिन्नर्थेऽनुरूपं दृष्टान्तं दर्शयति (तद्यथेत्यादि) तद् यथा येन प्रकारेण लवणेन क्षारद्रव्येण सुवर्णं त्रुटितसुवर्णद्रव्यं संदध्यात् संदधाति संयोजयति यदि सुवर्णनिर्मितं हारादिकं कारणवशात् खण्डितं भवति तदा भागद्वयस्य मुखं वह्नौ प्रतापयति ततश्च क्षारद्रव्यं सुहागेति लोकप्रसिद्धं तत्र प्रक्षिप्य वह्नौ तापयित्वा संयोजयति एकीकरोति क्षारद्रव्यवशात् कठि-नमपिसुवर्णं तथा द्रवीभवति यावता उभयोः परस्परं संयोजनं जायते। यद्यपि वह्नितापितसुवर्णं द्रवीभवति स्वयमेव तथापि क्षारद्रव्येण तादृशं मृदुत्वं जायते यावता परस्परं संयुक्तं भवति। रजतादीनां खण्डितानां संयोजनं तु केवलेन सुवर्णेन क्षारमिश्रितसुवर्णादिना वा भवतीति । सुवर्णेन रजतं त्रुटितं रजतादिकं सुवर्णेन संदधाति । रजतेन संयोजकेन त्रपुद्रव्यं संदध्यात् संदधाति। त्रपुणा संयोजकेन सीसं त्रुटितं सन्दध्यात् संदधाति,सीसेन लोहं संदध्यात् । लोहेन दारुकाष्ठादिकं संदध्यात् । दारु चर्मणा काष्ठोप-रिभागंस्थितचर्मणा त्वग्भागेन चर्मणा वा अन्यत त्रुटितं वस्तु संदधाति । एवं प्रकारेण दृष्टान्तं दर्शयित्वा दार्ष्टान्तिके योजयति (एवमेषामित्यादि)। एवं सुवर्णादिवत् एषां पृथिवीभूप्रतिलोकानां आसामग्न्यादिदेवतानां अस्यास्त्रय्याः ऋगादिलक्षणाया विद्यायाः वीर्येण सारभूतेनोजसा यज्ञस्य

एषमेषां लोकानमासां देवतानामरयास्त्रय्या विद्यायां वीर्येण यज्ञस्य विरिष्टं सन्दधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद् ब्रह्मा भवति ॥८॥

एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद् ब्रह्मा भवत्येवं विदं ह वा एषा ब्रह्माणमनु गाथा यतो यत आवर्तते तत्तद्गच्छति ॥९॥

विरिष्टं क्षतम् संदधाति समाहितं भवति । भूरादिव्याहृतीनां पृथिव्यादिलोकसारभूताग्न्यादिदेवतासारभूतत्रयीविद्यासारत्वात् तद्वीर्यत्वाच्चैषां पृथिव्यादीनामुक्तानां सारेण सुवर्णादिसंधानवदेव यज्ञक्षतमपि समाहितं भवतीति भावः । (भेषजकृतो ह वेत्यादि) । यथा ज्वरादिरोगार्तः पुरुषः सुशिक्षितवैद्येन देशकालोचितभेषजप्रयोगात् गतरोगो भवति तथा यस्मिन् यज्ञे एवंवित् ब्रह्मा ऋत्विग् भवति स यज्ञः गतक्षतो भवति ॥८॥

(एष ह वेत्यादि) एषो वा यत उदक्प्रवणः उत्तरमार्गप्राप्तिकारणं भवति यत्र यस्मिन् यज्ञे एवंवित् लोकसारभूतव्याहृतिज्ञानयुक्तो भवति ब्रह्म एवंविदं यथोक्तव्याहृतिज्ञं ब्रह्माणमनुलक्षीकृत्य एषा वक्ष्यमाणा गाथा भवति।(यतो यत इत्यादि)यतो यतो यत्र यत्र यज्ञस्य क्षतमावर्तते आ समन्तात् व्याप्य वर्तते अथवा ईषदर्थक आकारः ईषदपि अल्पमपि क्षतं भवति तत तत् तत्सर्वं मानवो मननशीलो ब्रह्मा गच्छति व्याहृतिबलेन समाधानं करोति । यथा अश्वा बडवा स्त्रोपरि आरूढान् योधान् शत्रुभ्योऽपि रक्षति परिपालयति। एवमेव एको ब्रह्मैव ऋत्विक् कुरून् यज्ञकर्तॄन् ऋत्विजो रक्ष-

मानवो ब्रह्मैवैक ऋत्विक्कुरूनश्वाऽभिरक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम् नानेवंविदम् ॥१०॥

इति छान्दोग्योपनिषदि चतुर्थाध्यायस्य

सप्तदशः खण्डः ॥ १७ ॥

समाप्तोय चतुर्थोध्यायः ॥

ति परिपालयति यज्ञक्षतादिना । एवंविद्ध ह वै व्याहृतिज्ञानयुक्त एव ब्रह्मा यज्ञं तत्फलभोक्तारं यजमानं सर्वानेव यज्ञसंपादकान् ऋत्विजोऽभिरक्षति परिपालयति यस्मात् कारणात् एवंवित् ब्रह्मा सर्वान् रक्षति तस्मात् कारणात् एवंविदमेव ब्रह्माणं यथोक्तयज्ञे कुर्वीत कुर्यात् यजमानो नानेवं-विदम् । कथमपि व्याहृतिज्ञानरहितं ब्रह्माणं न कुर्यात् नानेवंविदं कुर्यात् द्विर्वचनमध्यायसमाप्तिं सूचयति ।

इति छान्दोग्योपनिषदि आनन्दभाष्ये चतुर्थाध्यायस्य

सप्तदशः खण्डः ॥ १७ ॥

इति श्रीमद्भगवद्रामानन्दाचार्यकृतानन्दभाष्यभूषितायां छान्दोग्योपनिषदि चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

समरीतिर्महातेजाः परब्रह्म सनातनः ।
जयता ज्जानकीनाथो वेदवेद्यो महामतिः ॥

Rukur Nagpal

अथ जगद्गुरुश्रीरामानन्दाचार्यसिंहासनासीन

जगद्गुरुश्रीअनन्तानन्दाचार्यप्रणीतः

# सद्विद्यार्थनिर्णयः

वेदकृद्राघवं ब्रह्म सूत्रकृद्बादरायणम् ।
बोधायनं च वन्देऽहं वृत्तिकृत्पुरुषोत्तमम् ॥१॥
आनन्दभाष्यकृद्रामानन्दाचार्यं प्रणम्य च ।
मोदाय विदुषां कुर्वे सद्विद्यार्थस्य निर्णयम् ॥२॥
उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥३॥
अर्थनिर्णायकानीति लिङ्गानि षड्विधानि हि ।
कुर्वन्ति तानि निर्दोषं सद्विद्यार्थविनिर्णयम् ॥४॥
ब्रह्म च सविशेषं हि सद्विद्याविषयो मतः ।
उपक्रमे 'सदेवे'ति श्रुत्या यद् ब्रह्म बोधितम् ॥५॥
उपादानं निमित्तं च कारणं द्विविधं खलु ।
ततश्च सर्वशक्तित्वं सर्वज्ञत्वं च तत्र हि ॥६॥
सविशेषं तथा ब्रह्मोपसंहारेऽपि बोध्यते ।
तत्पदत्वम्पदाभ्यां च सामानाधिकरण्यतः ॥७॥
यतस्तत्पदतश्चात्र परं ब्रह्मैव बोध्यते ।
ज्ञाप्यते तद्वपुष्कं हि ब्रह्म त्वम्पदतस्तथा ॥८॥
प्रकारिणोस्ततश्चैक्यं ब्रह्मणोरत्र सम्मतम् ।
जीवात्मब्रह्मणोर्नैक्यं देहदेहिस्वरूपयोः ॥९॥
सामानाधिकरण्यं न यद्येकवाचिता न हि ।
जघन्या लक्षणा बोध्या शक्तितो बोध सम्भवे ॥१०॥

Scanned by CamScanner

तत्त्वमसीति वाक्यस्य नववारप्रयोगतः ।
अभ्यासोऽपि वदत्यत्र ब्रह्मणः सविशेषताम् ॥११॥
वर्त्ततेऽपूर्वता चात्र यतः श्रुत्यैव निश्चिता ।
हेतुता जगतो रामे सकलान्तर्नियन्तृता ॥१२॥
"यावन्न विमोक्ष्ये" श्रुत्याः "सम्पत्स्ये" इति शब्दतः ।
फलेऽपि प्राप्यतोक्तेश्च ब्रह्मणः सविशेषता ॥१३॥
तदर्थे चार्थवादोऽपि सद्विद्यायां च विद्यते ।
कथिता हि कथा यस्मात् पितृपुत्रोक्तिलक्षणा ॥१४॥
मृत्पिण्डादय उक्ता हि दृष्टान्ताश्च त्रयस्ततः ।
उपपत्तिस्तदर्थे च सद्विद्यायां हि वर्त्तते ॥१५॥
रामानन्दार्यशिष्यश्रीअनन्तानन्दनिर्मितः ।
सद्विद्यार्थप्रदो भूयात् सद्विद्यार्थस्य निर्णयः ॥१६॥

સમસીતિર્ગદિતો નઃ પરબ્રહ્મ સનાતનઃ ।
જયતાજ્જાનકીનાથો વેદવેદ્યો મહામતિઃ ॥